# ত্রয়ীসংগ্রহঃ।

১। এই শিরোনামে ঋক্ (পদ্য), যজু (গদ্য) ও সাম (গীতি), এই ত্রিবিধরচনাময়ী চতুঃসংহিতা হইতে এবং সেই সেই ব্রাহ্মণ হইতে, তথা আরণ্যক হইতে কতকগুলি শ্রুতি সঙ্কলিত করা হইতেছে। ইহা এরূপ ভাবে সঙ্কলন করা হইতেছে, যাহাতে এই সংগ্রহমাত্রের আলোচনা করিলেই সংহিতা, ব্রাহ্মণ ও আরণ্যক নামে সুপ্রসিদ্ধ বৈদিকগ্রন্থসমূহের একরূপ সাধারণ পরিচয় পাওআ যাইবে অর্থাৎ সংহিতাসমূহের মধ্যে কোন্ বেদের সংহিতায় কিরূপ বিষয় সমধিক বর্ণিত রহিয়াছে এবং কোন্ সংহিতার রচনাপ্রণালী কিরূপ ইত্যাদি জ্ঞান জন্মিতে পারিবে। এইরূপ প্রত্যেক ব্রাহ্মণ-গ্রন্থের ও প্রত্যেক আরণ্যক গ্রন্থেরও বিষয় ও রচনা সম্বন্ধে পরিচয় পাওআ যাইবে। বিশেষত সামসমূহের সাধারণ শ্রেণীবিভাগাদিও অনবগত থাকিবে না।

২। এই সংগ্রহের ভূমিকা বা পরিচায়িকা বিজ্ঞপ্তিখানিও কিঞ্চিৎ বিস্তৃতভাবে লিখিতে ইচ্ছা করিয়াছি; এমন কি, তাহার সহিত এই সংগ্রহটুকু বিশেষ মনোনিবেশ সহ অধ্যয়ন করিলে চারিবেদের সকল শাখার সর্ব্ববিধগ্রন্থেরই স্থূল স্থূল বিষয় ও রচনাদি সম্বন্ধে একরূপ আভাস অবগত হইতে পারিবে।

৩। ইহা অংশদ্বয়ে বিভক্ত করা হইতেছে; প্রথম অংশে মূল ও ভাষ্য এবং অপর অংশে টীপ্পনী ও বঙ্গানুবাদ থাকিবে। টীপ্পনীর মধ্যে ব্যাখ্যান্তর, ভাষ্যে প্রকাশিত শ্রুত্যাদির স্থান-নির্দ্দেশাদি ও সম্পাদকীয় মন্তব্য প্রভৃতি প্রকাশিত হইবে এবং বঙ্গানুবাদ, প্রথমে কেবল শব্দগুলির অর্থানুসারে থাকিবে, তৎপরে অতি সরলভাষায় তাহাই সুবিস্তৃত করাও যাইবে।

৪। যদি ইহা অভিপ্রায়ানুরূপ সম্পন্ন হইয়া উঠে, এবং আমার ও উষার জীবন, আরও কিছুদিন অব্যাহত থাকে, তবে "উপনিষৎসংগ্রহঃ" এবং "দর্শনসংগ্রহঃ" ও এইভাবে প্রকাশ করিবার ইচ্ছা আছে॥

## ॥ त्रयीसंग्रहसूचना ॥

अथात्र ऋग्यजुस्सामेतित्रयीरचितसंहिताचतुष्टयात्, तद्ब्राह्मणचतुष्टयाच, तदीयारण्यकचतुष्टयादपि, निदर्शनीभूतमन्त्रादीनि सभाष्याण्येव संगृह्य प्रकाश्यन्ते । यथा चैतत्संग्रहपाठादनधीतवेदविद्याना मपि गुरूपदेश मन्तरैव भवेद् वेदपदार्थबोधः, तथैव यतितव्य मिति धियाय मारम्भः। अतोऽस्य व्याख्यान्तरादिज्ञापिकां टीप्पनीम्, सुगमानुवादम्, किञ्चित्परिचायिका मुपक्रमणिकाञ्च प्रणीय कामितु मपीहेच्छा विद्यते ॥

---

## ॥ शरीरमनसोः स्वास्थ्ये जलञ्च हेतुः ॥

नैतदधुनैव विज्ञातम्,— स्नानीयपानीयोदकदोषादपि शारीरमानसरोगाः सञ्जायन्त इति ; पुराप्यासीदेवैतन्निर्णीतम् । अतएवैवं श्रूयेते सामवेदीयसमावर्त्तनसंस्काराङ्गस्नापनमन्त्रेष्विमावपि ( १, ७, १ ; २ )—

"ये अप्स्वन्तरग्नयः प्रविष्टा गोह्य उपगोह्यो मरूको मनोहाः ।
खलो विरुजस्तनूदूषिरिन्द्रियहा अति तान्सृजामि ॥ १ ॥
यदपां घोरं यदपां क्रूरं यदपा मशान्त मति तत्सृजामि ॥ २ ॥"

अत्र प्रथममन्त्रे येऽष्टावग्नयो दोषकारिण उक्ताः, ते प्राय स्तथाविधा एव पारस्करगृह्ये च स्मृताः ; अथर्वसंहिताया मपि श्रुतास्तदभिप्रायमोषकास्तद्विधाः शब्दाः । द्वितीयमन्त्रे च यानि जलदूषणान्युक्तानि, तान्यप्याथर्वणिकाः समामनन्ति ; तत्रायन्तु यथायथम्, द्वितीयतृतीये नामतः परिवर्तयन्तीति विशेषः । परं मन्त्रो एषा मर्था न क्वापुरपदिष्टा दृश्यन्ते ! तदद्य निरुक्तादिसाहाय्यतो यावद्वगम्यते तावदेवेह वर्णयामः ।—

| मन्त्रस्थपदानि | अर्थाः | शारीरदोषाः | मानसदोषाः |
|---|---|---|---|
| १ गोह्यः | संवरणयोग्यः ; | उच्चैर्वाक्प्रयोग, | क्रोधश्च । |
| २ उपगोह्यः | आलिङ्गनयोग्यः ; | रथक्षोभः, | मोहश्च । |
| ३ मयूकः | मृगभावः ; | अतिचङ्क्रमणम्, | मदश्च । |
| ४ मनोहाः | मनःक्षोभकम् ; | अत्यशनम्, | लोभश्च । |
| ५ खलः | पक्वापक्वयोर्विवादमूलम्; | अजीर्णम्, | मात्सर्यञ्च । |
| ६ विरजः | विशेषरोगकृत् ; | अहितभोजनम्, | अतिचिन्ता च । |
| ७ तनूदूषिः | धातुदूषणम् | दिवास्वप्नः, | कुचिन्ता च । |
| ८ इन्द्रियहाः | इन्द्रियाणामसामर्थ्यहेतुः; | अतिमैथुनम्, | कामश्च । |
| ९ घोरम् | प्रवृद्धः कफः ; | हीनयोगः, | अप्रवृत्तिश्च । |
| १० क्रूरम् | पित्ताश्रय-कफः ; | मिथ्यायोगः, | दुष्टप्रवृत्तिश्च । |
| ११ अशान्तम् | वाताश्रय-कफः ; | अतियोगः, | अतिप्रवृत्तिश्च । |

प्रसिद्धं चैतत् देशभेदादेव नराणां शारीरबलाबलभेदो मानसप्रकृतिभेदश्चोपजायेते; नूनं तत्र जलवायुप्रकृतिभेद एव निदानम्। शरीरेषु श्लेष्मस्वरूपेणावतिष्ठते जलम्, पित्तस्वरूपेणाग्निः, वातस्वरूपेण वायुः ; तत्र कफाश्रितावेव पित्तवाताविति चार्यचिकित्साशास्त्राणां सिद्धान्तः प्रतीयते ; "अतोऽवलम्बकः श्लेष्मा (वाग० १, १२)"—इत्येवमादिवचनात् ।

अतः समावर्तनादिस्नानाय गोह्यादिदोषशून्य मेव जल मानेयम्, मन्त्रप्रभावतः संशोधैरव तथाविधं करणीयं वेति समाम्नातौ मन्त्रौ 'ये अपसन्तः'-इति, 'यदपां घोरम्' —इति च ।

गोह्याद्यष्टानां पदाना मग्निवाचकत्वं तत्तज्जनकरूपलक्ष्यार्थलक्षकत्वं चेहावगन्तव्यम् ; तथैव तात्पर्योपपत्तेः; तात्पर्यानुपपत्तिप्रतिसन्धान मेव हि लक्षणाबीज मिति सिद्धान्तः। तदेवं 'गोह्यः' =गोह्यजनकः='अग्निः' =जलीयवाष्पविशेषः, योऽस्ति

पां मध्ये, न मतिसृजामि परित्यजामि ; मन्त्रप्रभावतः दूरं यामि ; अथवा तादृशस्याग्नेर्ग्रहणं यथा न स्यात् तथैव चेष्टे ; ादृशस्याग्नेर्दूरीभाव मेवेश्वरं प्रार्थये वेत्यर्थः फलितः । था द्वितीयमन्त्रीयघोरादिपदानां च तत्तद्भावेष्वेव लक्षणा ीकार्या, जन्यजनकभावश्चेह षष्ठ्यर्थः । तथा चाब्जन्यो यो रभावः, अब्जन्यो यः क्रूरभावः, अब्जन्यो यश्चाशान्तभावः, षां त्रिविधाना मपि दोषभावाना मस्य स्नानार्थं मुपस्थितस्य रीरेऽनाविर्भावः प्रार्थ्यतेऽनेन मन्त्रपाठेन । तदेवं 'घोरम्' अब्-न्यो यो घोरभावः प्रवृद्धैकफलस्वरूपतया घातुकभावः, यतश्च नसोऽप्रवृत्तिः, तथा इन्द्रियाणां च विषयेषु हीनयोगः अयोगो यते, तादृशभावस्य निराकरणप्रार्थनं सम्पद्यते । एव मेवे-त्तरत्रापि ज्ञेय मित्यलं धीमत्सु दिग्दर्शनायेति शम् ॥

---

## সামবিদ্যার্থিগণের পাঠ্য ।

যাঁহারা সামবেদে বিশেষ অভিজ্ঞতা লাভ করিতে ইচ্ছা করেন; শেষত যাঁহারা আমার বৈদিকবিদ্যালয়ে সামবেদ অধ্যয়ন করিতে-ন. তাঁহাদের পঞ্চবর্ষমাত্রেই ইষ্টসিদ্ধির জন্য নিম্নলিখিত গ্রন্থগুলি ঠ্য নির্ণয় করা হইয়াছে।

### প্রথম বর্ষের পাঠ্য ।

কৌথুমাহ্নিকপদ্ধতিঃ ( সন্ধ্যাসূত্রাদি-অনুসারে সংগৃহীত ) ।

কৌথুমস্নানপদ্ধতিঃ ( স্নানসূত্রানুসারে সংগৃহীত ) ।

সূক্ত-চতুষ্টয়ম্ ( বিষ্ণুসূক্ত, পুরুষসূক্ত, শ্রীসূক্ত ও দেবীসূক্ত ) ।

সামসংগ্রহঃ ( যে সামগুলি সামবেদীর অবশ্য জ্ঞাতব্য ) ।

### দ্বিতীয় বর্ষের পাঠ্য ।

শান্তিপাঠঃ ( পূর্ব্বাচার্য্য-সংগৃহীত ও প্রচলিত ) ।

গোভিলগৃহ্যসূত্রম্ ( বিবাহসংস্কারাদি-বিধায়ক ) ।

## ॥ বৈদিকপত্রিকা ॥

৭। (গৃহ্য)- মন্ত্রব্রাহ্মণম্ (ছান্দোগ্য ব্রাহ্মণের অধ্যায়দ্বয়মাত্র)

৮। (শ্রৌত)- মন্ত্রব্রাহ্মণম্ (প্রৌঢ়ব্রাহ্মণের অধ্যায়ৈকমাত্র)।

তৃতীয় বর্ষের পাঠ্য।

৯। শিক্ষাচতুষ্টয়ম্ (নারদীয়া, লোমশী, গৌতমী ও মাণ্ডুকী)।

১০। ব্যাকরণম্ (পাণিনির বৈদিকপ্রক্রিয়া, মৎকৃত বৃত্তির সহিত

১১। নিরুক্তদ্বয়ম (মৎকৃত টীপ্পনীসহ, সটীক নিঘণ্টু ও যাস্কীয়)

চতুর্থ বর্ষের পাঠ্য।

১২। ছান্দোগ্যারণ্যকম্ (ভাষ্য ও বঙ্গানুবাদদ্বয় সহ মুদ্রিত)।

১৩। ছান্দোগ্যোপনিষৎ (ভাষ্যাদি ও গুরূপদিষ্টগূঢ়োপদেশ সহ)

পঞ্চম বর্ষের পাঠ্য।

১৪। প্রাতিশাখ্যম্।
১৫। ঋক্‌তন্ত্রম্।
১৬। সামতন্ত্রম্।
১৭। অক্ষরতন্ত্রম্।
১৮। পঞ্চবিধসূত্রম্।
১৯। সামান্যসূত্রম্।
২০। নিদানসূত্রম্।
২১। অনুপদসূত্রম্।
২২। ঔক্ষাত্রপ্রয়োগঃ।

সামবেদে বিজ্ঞতা লাভ করিতে হই- এ গ্রন্থগুলিরও অধ্যয়ন নিতান্ত আবশ্- কিন্তু গ্রন্থগুলি নিতান্ত ক্ষুদ্র ও সুগম ন- সুতরাং সকলগুলির সম্পূর্ণাধ্যয়ন ছাত্রা- বস্থায় স্বল্পকালের মধ্যে হইবেই না পরং- বর্ষৈকের মধ্যে দিক্‌প্রদর্শনস্বরূপে কোন কোন অংশ অধীত হইতে পারিবে এবং অর্থবোধের সঙ্কেত অবগত হইলে পরে গুরূপদেশের আর অপেক্ষাও থাকিবে না।

শিক্ষিতসমাজে, বলা বাহুল্য বেদের সহিত দর্শনশাস্ত্রাধ্যয়ন- প্রয়োজনীয়। অতএব যাঁহারা বেদাধ্যয়নের সহিত দর্শনশাস্ত্রাধ্যয়নে- সমর্থ, তাঁহারা প্রথমাব্দে ন্যায় বা সাংখ্য, দ্বিতীয়ে বৈশেষিক বা পাতঞ্জল, তৃতীয়ে ও চতুর্থে বেদান্ত এবং পঞ্চম বর্ষে মীমাংসা অধ্যয়নও করিতে পারেন।

সকল বেদই ভাগদ্বয়ে বিভক্ত; মন্ত্র ও ব্রাহ্মণ। সামবেদের মন্ত্রভাগও ভাগদ্বয়ে বিভক্ত; ছন্দঃ ও গান। ছন্দো নামে তিনখানি গ্রন্থ অধীত হইয়া থাকে। একমাত্র ঐ গ্রন্থত্রয় পদপাঠাদির সহিত

# ॥ अथ गृह्यासंग्रहः ॥

( गोभिलीयगृह्यपरिशिष्टविशेषः )

॥ भगवता गोभिलाचार्यपुत्रेण प्रणीतः ॥

---

॥ श्रीसत्यव्रतशर्म्मणा प्रकाशितः ॥



CALCUTTA.

Printed by Mohendra Nath Sircar.

16—1, GHOSHE'S LANE, SATYA PRESS.

1891.

## ॥ संक्षिप्तविज्ञापनम् ॥

—०—

अथ वाक्यार्थज्ञानं सुगमयितुम्, छन्दोदोषं निवारयितुं, ग्रन्थान्तरविरोध मपगमयितुं वा पाठाः संशोधनीया इति धिया नात्र क्वापि कतमोऽप्यंशः परिवर्त्तितः; प्रकृतपाठानां प्रकटनायैव मन्मित्रवरसम्पादितस्याप्यस्य पुनरापादनारम्भात्। "संवत् १५९७ वर्षीयचैत्रपौर्णमास्यां भृगुदिने लिखितं" गुरुपरम्परया पठित मेव पुस्तक मस्य प्रधानादर्शीकृतञ्चेति शम् ॥

॥ श्रीसत्यव्रतशर्म्मा ॥

॥ कलिकाता। संवत् १९४

# ॥ अथ गृह्यासंग्रहः ॥

---

॥ अथ प्रथमप्रपाठकः ॥

॥ ॐ नमः सामवेदाय ॥

ॐ अथातः संप्रवक्ष्यामि यदुक्तं पद्मयोनिना ।
ब्राह्मणानां हितार्थाय संस्कारार्थं तु भाषितम् । १
लौकिकः पावको ह्यग्निः प्रथमः परिकीर्तितः ।
अग्निस्तु मारुतो नाम गर्भाधाने विधीयते । २
पुंसवने चान्द्रमसः शुङ्गाकर्मणि शोभनः ।
सीमन्ते मङ्गलो नाम प्रगल्भो जातकर्मणि । ३
नाम्नि च पार्थिवो ह्यग्निः प्राशने च शुचिस्तथा ।
सभ्यनामाथ चूडे तु व्रतादेशे समुद्भवः । ४
गोदाने सूर्यनामा तु केशान्ते ह्यग्निरुच्यते ।
वैश्वानरो विसर्गे तु विवाहे योजकः स्मृतः । ५
चतुर्थ्यान्तु शिखी नाम धृतिरग्निस्तथापरे ।
आवसथ्ये भवो ज्ञेयो वैश्वदेवे तु पावकः । ६
ब्रह्मा वै गार्हपत्ये स्यादीश्वरो दक्षिणे तथा ।
विष्णुराहवनीये स्यादग्निहोत्रे त्रयोऽग्नयः । ७

लक्षहोमे वह्निर्नाम कोटिहोमे हुताशनः ।
प्रायश्चित्ते विधिश्चैव पाकयज्ञे तु साहसः । ८
देवानाꣳ हव्यवाहस्तु पितृणां कव्यवाहनः ।
पूर्णाहुत्यां मृडो नाम शान्तिके वरदस्तथा । ९
पौष्टिके बलदश्चैव क्रोधाग्निश्चाभिचारके ।
वश्यार्थे कामदो नाम वनदाहे तु दूतकः । १०
कोष्ठे तु जठरो नाम क्रव्यादो मृतभक्षणे
समुद्रे वाड़वो ज्ञेयः क्षये संवर्त्तको भवेत् । ११
एतेऽग्नयः समाख्याताः श्रावयेद् ब्राह्मणः सदा ।
सप्तचित्ꣳशतिर्विख्याता ज्ञातव्याश्च द्विजेन तु । १२
सप्त जिह्वाः स्फुरन्त्येता हुताशनमुखे स्थिताः ।
याभिर्हव्यꣳसमश्नन्ति हुतꣳसम्यग् द्विजोत्तमैः । १३
काली कराली च मनोजवा च
सुलोहिता चैव सुधूम्रवर्णा ।
स्फुलिङ्गिनी चैव शुचिस्मिता च
लेलायमाना इति सप्त जिह्वाः । १४
द्वे शान्तिके द्विगुणा पौष्टिके च ।
तिस्रोऽभिचारिण्यस्ते विप्रख्याः । १५
एतास्त्रोक्ता विशेषेण ज्ञातव्यास्तु द्विजेन वै ।
ध्यात्वैव तु होतव्यं यो यत्र विहितो विधिः । १६

अविदित्वा तु यो ह्यग्निं होमयेदविचक्षणः ।
न हुतं न च संस्कारो न च कर्म्मफलं भवेत् । १७
ज्ञात्वा स्वरूप माग्नेयं योऽग्नेराराधनं चरेत् ।
ऐहिकामुष्मिकैः कामैः सारथिस्तस्य पावकः । १८
निःसंशयकरैरर्थैः पुत्रशिष्यहितैषिणा ।
गोभिलाचार्यपुत्रेण कृतं शास्त्रं सुनिश्चितम् । १९
सप्तज्वाल मुखं वक्ष्ये यदुक्तं पद्मयोनिना ।
सप्तजिह्वाप्रमाणन्तु प्रादेशं परिकीर्त्तितम् । २०
प्रमाणं चतुरस्रञ्च वर्तुलं मुखमण्डलम् ।
यदर्थं हूयते वह्नौ तां जिह्वां परिकल्पयेत् । २१
कराली धूमिनी श्वेता लोहिता चातिलोहिता ।
सुपर्णी पद्मरागी च सप्तैताः परिकीर्त्तिताः । २२
करालीं राक्षसाश्नन्ति धूमिनीं मनुसत्तथा ।
श्वेतां नागाः समश्नन्ति पिशाचा लोहितां तथा ।
महालोहितां गन्धर्वाः सुपर्णीञ्च यमस्तथा । २३
पद्मरागी च विख्याता दिव्या जिह्वा हुताशने ।
तस्यान्तु होमयेन्नित्यं सुसमिद्धे हुताशने । २४
विधूमे लेलिहाने च होतव्यं तन्त्रसिद्धये ।
न धूमो न तथा ज्वाला विशुद्धोऽप्यविचक्षुषा । २५
प्रभया भाति यत्रैव भगवांस्तत्र तिष्ठति ।

तत्र पूर्णाहुतिं दद्यात्सर्वकामप्रसिद्धये । २६

मारणी राक्षसी रौद्री क्रव्यादी ब्रह्मराक्षसी ।

स्थूलजङ्घा कराली च वज्रहस्ता तथैव च ।

यमदूती च विज्ञेया इत्येताः समिधो नव । २७

त्रिशीर्षा विदला ह्रस्वा वक्रा स्थूला [illegible]धा ।

कृमिदष्टा च दीर्घा च वर्जनीयाः प्र[illegible] ।

विशीर्षाऽऽयुःक्षयं कुर्याद् विदला व्या[illegible]

ह्रस्वा मृत्युकरी रौद्री दुर्भगत्वन्तु व[illegible]या ।

विघ्नानि कुरुते स्थूला कृशा च रिपुव[illegible]नी ।

द्विधा नाशयते ह्यर्थं भार्यां च प्रियबान्धवान् । ३[illegible]

कीटदष्टातिभयदा दीर्घा चैव सुतान् हरेत् ।

तस्मात्सर्वप्रयत्नेन वर्जनीयाश्च वर्जयेत् । ३१

अकृशा चैव न स्थूला अशाखा चापलाशिनी ।

अघोरा नाधिका न्यूनाः समिधः सर्वकामदाः । ३२

गृह्याकर्मसु सर्वेषु होत्रे प्रतिविधिं ध्रुवम् ।

क्रमशः सम्प्रवक्ष्यामि यो यत्र विहितो विधिः । ३३

अनुद्भिन्नपदार्थानि गृह्यावाक्यानि यानि तु ।

तेषां वक्ष्यामि सिध्यर्थं श्लोकैः संग्रहसंज्ञकैः । ३४

पत्नाः पुत्राश्च कन्याश्च जनिष्याश्चापरे सुताः ।

गृह्या इति समाख्याता यजमानस्य दायकाः । ३५

तेषाꣳ संस्कारयोगेन शान्तिकर्म्म क्रियासु च ।
आचार्यविहितः कल्पस्तस्माद् गृह्या इति स्थितिः ।३६
भूमेः समूहनं कृत्वा गोमयेनोपलिप्य च ।
द्रव्याण्युत्तरतः स्थाप्य दर्भौ कुर्यादुदङ्मुखोम् । ३७
गोचर्ममात्रं कुर्वीत चतुरस्र मनूषरे ।
सर्वतोऽरत्निमात्रꣳ स्यात् सायं प्रातस्तु होमयोः । ३८
[illegible] यत्र गवां तिष्ठति संवृतम् ।
बालवत्सप्रसूतानां गोचर्म इति तं विदुः । ३९
षट् पञ्च चतुरो वापि त्रयो द्वौ वा शफौ स्मृतौ ।
गोचर्म इति शब्दोऽयं विधियोगे निपात्यते । ४०
प्राग्ग्रीवं ब्रह्मवर्चस्य मुदग्ग्रीवं यशोत्तमम् ।
पित्र्यं दक्षिणतो नीचं प्रतिष्ठालम्भकꣳ समम् । ४१
वरं गान्तु विजानीयाच्चतुर्वर्षा मिति स्थितिः ।
दक्षिणानां विशिष्टं वै वरं त मपरं विदुः । ४२
चतुर्मुष्टिर्भवेत् किञ्चित् पुष्कलं च चतुर्गुणम् ।
पुष्कलानि च चत्वारि पूर्णपात्रं विधीयते । ४३
यत्र द्रव्यसमाहारे भोजनाचमने तथा ।
जपे वा होमकाले वा दक्षिणं बाहु मुद्धरेत् । ४४
होमः प्रतिग्रहो दानं भोजनाचमनानि च ।
अवहिर्जानु कर्माणि साङ्गुष्ठान्येव माचरेत् । ४५

आरम्भः सर्वहोमाना माहुर्यज्ञविदो जनाः।
लक्षणं तत्प्रवक्ष्यामि प्रमाणं दैवतं च यत्। ४६
न नखेन न काष्ठेन नाश्मना मृण्मयेन वा।
प्रोल्लिखेल्लक्षणं विप्रः सिद्धिकामस्तु यो भवेत्। ४७
नखेन कुनखी चैव काष्ठेन व्याधि मिच्छति।
अश्मना धननाशः स्यान् मृन्मयेन कलिर्ध्रुवम्। ४८
फलेन फलिनी चैव पुष्पेण श्रिय मिच्छति।
पर्णेन धनलाभः स्याद्दीर्घ मायुः कुशेन तु। ४९
तस्मात् फलेन पुष्पेण पर्णेनाथ कुशेन वा।
प्रोल्लिखेल्लक्षणं विप्रः सिद्धिकामस्तु कर्मसु। ५०
सव्यं भूमौ प्रतिष्ठाप्य प्रोल्लिखेद्दक्षिणेन तु।
तावन्नोत्थापयेत्पाणिं यावदग्निं निधापयेत्। ५१
प्रागग्रा पार्थिवी लेखा आग्नेयी चाप्युदक् स्मृता।
प्राजापत्या च ऐन्द्री च सौमी च प्राक्कृता स्मृता। ५२
उत्करं गृह्य रेखाभ्योऽरत्निमात्रे निधापयेत्।
द्वार मेवन्तु द्रव्याणां प्रागुदीच्यां दिशि स्मृतम्। ५३
पार्थिवी चैव सौमी च लेखे द्वे द्वादशाङ्गुले।
एकविंशतिराग्नेयी प्रादेशिन्ये उभे स्मृते। ५४
षडङ्गुलान्तराः कार्या आग्नेयी संहितास्तु याः।
पार्थिवायास्तु लेखायास्तिस्रस्ता उत्तरोत्तराः। ५५

शुक्लवर्णा पार्थिवी स्यादाग्नेयी लोहिता भवेत् ।
प्राजापत्या भवेत् कृष्णा नीला मैन्द्रीं विनिर्दिशेत् ।
पीतवर्णा च सौमी स्याल्लेखानां वर्णलक्षणम् । ५६
एष लेखविधिः प्रोक्तो गृह्यकर्मसु सर्वसु ।
सूक्ष्मास्ता ऋजवः कार्या लेखास्ताः सुसमाहिताः ।५७
एतानि तत्त्वतो ज्ञात्वा गृह्यकर्मणि कारयेत् । ५८
विष्णुपादपरिक्रान्ता वाराहेणोद्धृता च या ।
शुचिर्मेध्या च पूता च किमर्थमुपलिख्यते । ५९
इन्द्रेण वज्राभिहतः पुरा वृत्रो महासुरः ।
मेदसा तस्य संक्लिन्ना तदर्थमुपलिख्यते । ६०
मेदं मुह्रियमाणस्य शेषं यत्किञ्च तिष्ठति ।
अन्तर्धानं मृदा चैव दीयते वेदनिश्चयः । ६१
द्यूते च व्यवहारे च प्रवृत्ते यज्ञकर्मणि ।
यानि पश्यत्युदासीनः कर्ता तानि न पश्यति । ६२
एकः कर्मनियुक्तः स्याद् द्वितीयस्तन्त्रधारकः ।
तृतीयः प्रश्नं प्रब्रूयात्ततः कर्म समाचरेत् । ६३
कपालैर्भिन्नपात्रैर्वा न त्वामैर्गोमयेन च ।
अग्निप्रणयनं कार्यं यजमानभयावहम् । ६४
अल्पः प्रणीतो विच्छिन्नोऽसमिद्धश्चापरिश्रुतः ।
त्वरया पुनरानीतो यजमानभयावहः । ६५

तस्माच्छुभेन पात्रेण अविच्छिन्नाकृशं बहु ।
अग्निप्रणयनं कुर्यात् यजमानसुखावहम् । ६६
शुभं पात्रं तु कर्त्तव्यं यजमानसुखावहम् । ६७
शुभं पात्रं तु कांस्यस्थात्तेनाग्निं प्रणयेद्बुधः ।
तस्याभावे शरावेण नवेनाभिमुखश्च तम् । ६८
सर्वतः पाणिपादान्तः सर्वतोक्षिशिरोमुखः ।
विश्वरूपो महानग्निः प्रणीतः सर्वकर्मसु । ६९
( प्राक्चणाभ्यारचणाभ्याञ्च लक्षणोल्लिखननेन वा ।
प्रणीताग्निः प्रकर्त्तव्यो विधिवद्याज्ञिको भवेत् । )
न वस्त्रेण धमेदग्निं न शूर्पेण न पाणिना ।
मुखेनोपधमेदग्निं मुखाद्ध्येषोऽध्यजायत । ७०
वस्त्रेण तु भवेद् व्याधिः शूर्पेण धननाशनम् ।
पाणिना मृत्युमाप्नोति मुखेन सिद्धिभाग्भवेत् । ७१
उदितेऽनुदितेचैव समयाध्युषिते तथा ।
सर्वथा वर्त्तते यज्ञ इतीयं वैदिकी श्रुतिः । ७२
रात्रेः षोड़शमे भागे ग्रहनक्षत्रभूषिते ।
अनुदयं विजानीयाद्धोमं तत्र प्रकल्पयेत् ॥ ७३
ततः प्रभातसमये नष्टे नक्षत्रमण्डले ।
रविविम्बं न दृश्येत समयाध्युषितं स्मृतम् । ७४
रेखामात्रन्तु दृश्येत रश्मिभिश्च समन्वितम् ।

अन्त्या समिद्विवाहस्य विभागः परमेष्ठिनः । ७६
परमेष्ठी विभक्तश्च जुहुयादक्षतान् सकृत् ।
प्रातस्तूष्णीं घृतं वापि प्रातराहुत्युपक्रमः । ७७
आश्वत्थीन्तु शमीगर्भा मरणिं कुर्व्वीत सोत्तराम् ।
उरोदीर्घां रत्निदीर्घां चतुर्विंशाङ्गुलां तथा ।
चतुरङ्गुलोच्छ्रितां कुर्य्यात् पृथुत्वे न षड़ङ्गुलाम् ।७८
अष्टाङ्गुलः प्रमन्थः स्याच्चात्वं स्यात् द्वादशाङ्गुलम् ।
ओविली द्वादशैव स्यादेतन्मन्थनयन्त्रकम् । ७९
मूलादष्टाङ्गुल मुत्सृज्य त्रीणि त्रीणि च पार्श्वयोः ।
देवयोनिः स विज्ञेयस्तत्र मथ्यो हुताशनः । ८०
मूलादष्टाङ्गुलं त्यक्त्वा अग्रात्तु द्वादशाङ्गुलम् ।
देवयोनिः स विज्ञेयस्तत्र मथ्यो हुताशनः । ८१
खादिरोऽरत्निदीर्घः स्यात् स्रुवोऽङ्गुष्ठपर्वखः ।
पाणी स्रुचं बाहुमात्रीं पाणितलाकारपुष्कराम् ।८२
त्वग्विलां त्वग्रे कुर्वीत मेचणं स्रुवाकुवादिवत् ।
शङ्कुश्चैवोपवेशश्च द्वादशाङ्गुल मुच्यते । ८३
नवैः शोभनैरगर्भैः पवित्रन्तु कुशाग्रजम् ।
ललाटाच्चिबुकं प्राहुर्बाहुमात्राः परिधयः । ८४
दीप्ताग्नौ विस्फुलिङ्गे वने दग्धेषु दारुषु ।
न च संस्कारदोषोऽस्ति तथा चरुकपालयोः । ८५

लेखनाभ्युक्षणे कृत्वा निहितेऽग्नौ समिद्धयेत् ।
ततो भूमिग्रहं कृत्वा कुर्य्यात् परिसमूहनम् । ८६
ब्रह्माण मुपसङ्कल्प्य चरुश्रपण मारभेत् ।
ब्रह्मणः स्तरणं कुर्याच्चरुर्यत्र न कल्पितः । ८७
ब्रह्मविष्टरयोश्चापि सन्देहे समुपस्थिते ।
ऊर्द्ध्वकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः । ८८
कतिभिस्तु कुशैर्ब्रह्मा कतिभिर्विष्टरः स्मृतः ।
पञ्चाशद्भिः कुशैर्ब्रह्मा तदर्द्धेन तु विष्टरः । ८९
उदगधारा मविच्छिन्ना मग्नि मारभ्य दक्षिणम् ।
दद्याद्ब्रह्मासनस्थाने सर्वकर्म्मसु नित्यशः । ९०
एकाग्नौ पितृयज्ञे च ब्रह्माणं नोपकल्पयेत् ।
सायं प्रातश्च होमेषु तथैव बलिकर्म्मसु । ९१
यवव्रीह्यादिकं ज्ञेयं तण्डुलादि कृताकृतम् ।
योऽदनन्तु कृतं विद्यात् न तस्य करणं पुनः । ९२
सीमन्ते दर्भपिञ्जूल्यस्तिस्रस्ताभिस्त्रिरुन्नयेत् ।
त्रिभिः श्वेतैश्च शललैः प्रोक्तो वीरतरः शरः । ९३
दिशाश्च विदिशाश्चैव यत्र नोक्ता विचारणा ।
"सर्वतः" तत्र शब्दोऽयं विधियोगे निपात्यते । ९४
विहितप्रतिषिद्धास्तु प्रणीतां नोपकल्पयेत् ।
वैरूपाक्षं जपेन्मन्त्रं प्रपदञ्चैव यज्ञवित् । ९५

परिधीꣳस्तु न कुर्वीत गृह्याकर्मसु याज्ञिकः ।
उदकाञ्जलयस्तिस्रस्ते वै परिधयः स्मृताः । ९६
सर्वेषा मेव होमानाꣳ समिदादौ विधीयते ।
कर्म्मान्ते चैव मेव स्यात् स्वाहां तत्र न कारयेत् ।९७
इध्म मष्टादश दारु प्रवदन्ति विचक्षणाः ।
दर्शे च पौर्णमासे च क्रियास्वन्यासु विंशतिः । ९८
प्रादेशमात्रं कुर्वीत मेक्षणꣳ समिधस्तथा ।
इध्मः समानवृक्षाणां द्विप्रादेशप्रमाणतः । ९९
प्रागग्राः समिधो देयास्ताश्च काम्ये ष्वपाटिताः ।
शान्त्यर्थेषु सशक्ताऽर्द्रा विपरीता जिघांसति । १००
इध्मः सन्नहनादानं चरुश्रपण मेव च ।
तूष्णी मेतानि कुर्वीत समस्त्ञ्च धा मन्त्रवेद् । १०१
आचार्य्यानुमतं वाक्य मेकीयं गृह्यते क्वचित् ।
शेषाण्येकीयवाक्यानि आचार्य्यो न प्रशंसति । १०२
द्रव्याणा मुपक्लृप्तानाꣳ होमीयानां यथाविधि ।
प्रसिञ्चेन्मेक्षणं कुर्य्यादद्भिरभ्युक्षण मेव च । १०३
पवित्र मन्तरे कृत्वा स्थाल्या माज्यꣳ समावपेत् ।
एतत् सम्पूयनं नाम पश्चादुत्पवनं स्मृतम् । १०४
अग्निना चैव मन्त्रेण पवित्रेण च चक्षुषा ।
चतुर्भिरेव यत् पूतं तदाज्य मितरद्धृतम् । १०५

घृतं वा यदि वा तैलं पयो वा दधि यावकम्।
आज्यस्थाने नियुक्तानामाज्यशब्दो विधीयते। १०६
आज्यानां सर्पिरादीनां संस्कारे विधिचोदिते।
अनधिश्रयणं दध्नः शेषाणां श्रयणं स्मृतम्। १०७
यथा सीमन्तिका नारी पूर्वगर्भेण संस्कृता।
एवमाज्यस्य संस्कारः संस्कारे विधिनोदिते। १०८
आज्यस्य हविषां चैव आज्ये पूर्वक्रियाविधिः।
तस्य सम्प्लवनं पूर्वं चरोः पर्य्युक्षणं परम्। १०९
पाणिना मेक्षणेनाथ स्रुवेणैव तु यद्धविः।
हूयते चानुपस्तीर्य्य उपघातः स उच्यते। ११०
यदुपघातं जुहुयाच्चरावाज्यं समावपेत्।
मेक्षणेन तु होतव्यं नाज्यभागौ न स्विष्टकृत्। १११
हुत्वाज्यं परिशेषं यद् द्रव्यमुपकल्पितम्।
स्रुवेणैव तु तत् स्पृष्टं सम्पातं चैव तं विदुः। ११२
स्थालीपाकावृतान्यत्तु यत्र संज्ञा निपात्यते।
तत्राज्यभागौ हुत्वैव स्रुच मास्तीर्य्यावद्यति। ११३।

इति गोभिलाचार्य्यपुत्रप्रणीते गृह्यासङ्ग्रहे
प्रथमः प्रपाठकः समाप्तः॥

---

॥ अथ द्वितीयप्रपाठकः ॥

---

स्नुतेभ्यो न प्रचिन्वीयात् यातयामं स्नुतं स्नुतम् ।
स्नुतशेषात्ततो गृह्य यज्ञवास्तुक्रिया तथा । १
यज्ञवास्तुक्रियां कृत्वा विधिदृष्टेन कर्म्मणा ।
आज्यधारामविच्छिन्नां जुहुयात् सार्वकामिकीम् । २
सायंप्रातर्वैश्वदेवे पितृयज्ञे तथैव च ।
कम्बूके गोमये नित्यं व्रतानां समिधासु च । ३
चैत्ये यूपे व्रीहियवे भूमावप्सु च याज्ञिकैः ।
व्याहृतीर्न प्रयोक्तव्या यज्ञवास्तुक्रिया तथा । ४
चरवे यो विधिः प्रोक्तः स एवेति विनिश्चयः ।
बलिं तेभ्यो न कुर्वीतापसिद्धार्थमेतान् हरेत । ५
यत्र मन्त्रा न विद्यन्ते व्याहृतीस्तत्र योजयेत् ।
त्वागा मेव चादेशे मन्त्रात् कर्म समाचरेत । ६
भूरादया व्याहृतयो वेदेभ्यो निःसृताः पुरा ।
महत्त्वं व्याहृतित्वञ्च प्राप्ताः स्वेनैव कर्मणा । ७
ॐकारजननात्तासां महत्वं परिभाष्यते ।
व्याहृत्या व्याहृतित्वञ्च तेन त्रैविद्यतां ययुः । ८
ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।

कण्ठं भित्त्वा विनिर्यातौ तेनैतौ मङ्गलावुभौ । ९
अथैताः स्वयाहृतयोग्यवीयस्यः पराः स्मृताः ।
ऐरावतः प्रतिचैत्र्े वेदान्तेष्वाश्रिताश्च याः । १०
मध्ये स्थण्डिल मन्त्रे च वारिणा परिसंवृतम् ।
पवित्रासिनव्र इदं विद्यात्तादृशं कर्मणा विदुः । ११
यत् विद्या च वित्तञ्च सत्यं धर्मः शमो दमः ।
अभिरूपः स विज्ञेयः स्वाश्रमे यो व्यवस्थितः । १२
लौकिके लोकसामान्ये क्रव्यादाग्नौ वृथा हुतम् ।
याज्ञिकं पुण्य मायुष्यं कर्मणा नोपपद्यते । १३
वैदिके लौकिके वाऽपि यज्ञ होति प्रयत्नतः ।
वैदिके ब्रह्मलोकः स्यात् लौकिके पापनाशनम् । १४
स्ववर्णाभिरनिन्द्याभिरद्भिरक्षतमिश्रितैः ।
स्नानं चतुर्भिः कलशैः स्त्रीभिः स्त्रीं यत्र प्लावनम् । १५
गौड़ी पैष्टी च माध्वी च विज्ञेयास्त्रिविधाः सुरा ।
पाणिकर्मणि गौड़ी स्यात्तथा माध्व्युधमा सुरा । १६
नग्निकान्तु वदेत् कन्यां यावन्नर्त्तुमती भवेत् ।
ऋतुमती त्वनग्निका तां प्रयच्छेत्त्वनग्निकाम् । १७
अप्राप्ता रजसो गौरी प्राप्ते रजसि रोहिणी ।
अव्यञ्जिता भवेत् कन्या कुचहीना तु नग्निका । १८
व्यञ्जनैस्तु समुत्पन्नैः सोमो भुञ्जीत कन्यकाम् ।

पयोधरैस्तु गन्धर्व्वा रजसाग्निः प्रकीर्त्तितः । १९
अमादव्यञ्जनोपेता मरजा मपयोधराम् ।
अभुक्ताञ्चैव सोमाद्यैः कन्यकान्न प्रशस्यते । २०
वेदिपिण्डात् क्रियावती सीतायाः फलते कृषिः ।
सर्व्वाभ्या च ह्रदे श्रेया गोष्ठे भवति गोमती । २१
चतुष्पथे प्रकीर्णा स्यात् द्यूतस्थाने कलिप्रिया ।
श्मशाने म्रियते भर्त्ता वन्ध्या भवति चोषरे । २२
नवमे सर्व एवैते कन्यायाः परिगृह्यन्ते ।
पाणिग्रहणमन्त्रास्तु नियतं दारलक्षणम् । २३
विवाहे यो विधिः प्रोक्तो मन्त्रा दाम्पत्यवाचकाः ।
वरस्तु तान् जपेत् सर्वान् क्षत्रियाजन्यवैश्ययोः । २४
महानदीषु या आपः कौप्यान्योदहृदेषु च ।
गन्धवर्णरसैर्युक्ता ध्रुवास्ता इति निश्चयः । २५
गन्धमाल्यैरलङ्कृत्य सकुम्भो वाग्यतः शुचिः ।
धारयेत् विषु वर्णेषु प्रावृतांसो द्विजोत्तमः । २६
यदा निष्क्रामयेत्कन्यां वरः पाणिं जिघृक्षयन् ।
अग्निप्रदक्षिणं कृत्वा कटस्तीर्णं पदं व्रजेत् । २७
पदा प्रपद्य पन्थानं पतियानं सज्ञपेद्वधूः ।
वरो वाऽत्र जपेन्मन्त्र माकटान्तादिति स्थितिः । २८
लाजानाज्यएव ध्रुवं कुम्भं प्राजनाश्मान मेव च ।

प्रदक्षिणानि कुर्वीत दम्पती तु विना ग्रही । २९
प्राजग्राह मुदग्राहं ब्रह्माण मृत्विजं तथा ।
एतानि वाह्यतः कृत्वा शेषाणान्तु प्रदक्षिणम् । ३०
दक्षिणां दिश मास्थाय यमो मृतुश्च तिष्ठतः ।
तयोस्तु रक्षणार्थाय तस्माद् ब्रह्मा वहिर्भवेत । ३१
सोमः प्रकृतिरेखा हि लाजानाश्रित्य तिष्ठति ।
विरुद्ध माज्यं सोमेन नाभिघारण मर्हति । ३२
शमीपलाशमिश्राणां लाजाना मभिघारणम् ।
पूर्वाणां घृतमिश्राणा माचार्यैः कल्पितं यथा । ३३
तथा लाजाञ्जलिर्बध्वा हूयतेऽङ्गुलिपर्वभिः ।
एवं लाजहविःशेषं होतव्यं शूर्पजिह्वया । ३४
अवसिक्तान्तु विधिना पाणिग्राहन्तु प्राजनी ।
पूर्व मनुगच्छेत्तु समाहं चाह मेव वा । ३५
ब्राह्मस्यार्षस्य दैवस्य प्राजापत्यस्य याज्ञिकैः ।
पूर्वं होमविधिः प्रोक्तः पश्चात् परिणयः स्मृतः । ३६
गान्धर्वासुरपैशाचा विवाहा राक्षसाश्च ये ।
तेषां परिणयः पूर्वं पश्चाद्धोमो विधीयते । ३७
उद्वर्त्तनं नखच्छेदो रोमच्छेदन मेव च ।
स्रंसनं मेखलायाश्च स्रासनानि विदुर्बुधाः । ३८
चूड़ाकर्मणि सीमन्ते यस्य पाकः सदा गृहे ।

विवाहे चैव लाजानां नोक्तो निर्वपणे विधिः।३९
दक्षिणाकपर्द्दा वासिष्ठा आत्रेयास्त्रिकपर्द्दिनः।
आङ्गिरसः पञ्चचूड़ा मुण्डा भृगवः शिखिनोऽन्ये। ४०
सर्वयज्ञेषु विप्राणा मद्भिः पूर्वं प्रवर्त्तते।
तस्मात् सुरोत्तमा आपोऽङ्गिरेवाभिषिचयेत्। ४१
ब्रह्मचारी व्रतादेशे व्रतनाम प्रवाचयेत्।
चरिष्ये यावदन्ताय सावित्रे चान्तकोर्त्तनम्। ४२
समा मासा महोरात्रास्तुल्या ब्राह्मणचोदिताः।
सावित्र मष्टभिर्वर्षैः कार्य्यं मासैर्दिनैश्च वा। ४३
सावित्रं यावदन्ताय धार्य्यं सर्वाश्रमस्थितैः।
चूड़ाकरणधर्मेण गोदाने चास्य वापनम्। ४४
विप्राणा मग्निराचार्य्य इन्द्रस्त्राता व्रते व्रते।
तस्मात् सर्वव्रतान्तेषु चरुरैन्द्रो विधीयते। ४५
अजिनं सर्वदैवत्य मैन्द्रो दण्ड इति स्मृतः।
सावित्रीं मेखला माहुस्तस्मात् सर्व्वाणि धारयेत्।४६
मेखला मजिनं दण्ड मुपवीतं कमण्डलुम्।
अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रतः।४७
यज्ञोपवीतं कुर्वीत सूत्रेण नवतान्तवम्।
देवतास्तत्र वक्ष्यामि आनुपूर्व्येण याः स्मृताः। ४८
ॐकारः प्रथमस्तन्तुर्द्वितीयश्चाग्निदैवतः।

तृतीयो नागदैवत्यश्चतुर्थः सोमदैवतः । ४९
पञ्चमः पितृदैवत्यः षष्ठश्चैव प्रजापतिः ।
सप्तमो वासुदैवत्योऽष्टमो यमदैवतः । ५०
नवमः सर्वदैवत्य इत्येते नव तन्तवः ।
द्विगुणं त्रिगुणं वापि एकग्रन्थिकृतं विदुः । ५१
केनैवोत्पादितं सूत्रम् केन वा त्रिगुणीकृतम् ।
केन वास्य कृतो ग्रन्थिः केन मन्त्रेण मन्त्रितम् । ५२
ब्रह्मणोत्पादितं सूत्रं विष्णुना त्रिगुणीकृतम् ।
रुद्रेण तु कृतो ग्रन्थिः सावित्र्या चाभिमन्त्रितम् । ५३
स्तनादूर्ध्वमधो नाभेर्न कर्त्तव्यं कथञ्चन ।
स्तनादूर्ध्वं श्रियं हन्ति नाभ्यधस्तात्तपःक्षयः । ५४
गोभिर्वालपवित्रेण धार्य्यमाणेन नित्यशः ।
न स्पृशन्तीह पापानि श्रियं गात्रेषु तिष्ठति । ५५
गोभिर्वालपवित्रेण यस्तु सन्ध्या मुपासते ।
गोधर्मेष्वेव वर्त्तन्ते न स पापेन लिप्यते । ५६
गोभिर्वालपवित्रेण यस्त्वग्नि मुपासते ।
पञ्चाग्नयो हुतास्तेन यावज्जीवं न संशयः । ५७
आचार्य्येणाभ्यनुज्ञात आचार्य्याग्नौ विधिर्यथा ।
प्रणीतेऽग्नौ समिद्दद्यादहन्या सा ब्रह्मचारिणाम् । ५८
दधि सर्पिश्च संयुक्तः प्रोक्तो ह्येष पृषातकः ।

होमकाले तु तस्याग्नेः स्थान मुत्तरपूर्वतः । ५९
कामग्रा प्रिया च हव्या च इडा रम्या सरस्वती ।
मही विश्रुता चाघ्न्या च गोनामानि विदुर्बुधाः । ६०
मधुपर्कं पिबेन्मन्थ मन्त्रतो हृदयं स्पृशेत् ।
अपूपानां चरोश्चापि सर्वस्थानां व्यनक्ति च । ६१
दध्यक्षतसुमनस आपश्चेति चतुष्टयम् ।
अर्घ्य एत्र प्रदातव्यो गृह्ये ये अर्घ्यार्हाः स्मृताः । ६२
दध्यक्षतसुमनसो घृतं सिद्धार्थका यवाः ।
पानीयश्चैव दर्भाश्च अष्टाङ्गो ह्यर्घ्य उच्यते । ६३
सर्पिषा मधुना दध्ना अर्च्चयेदर्हयन् सदा ।
ऋषिप्रोक्तेन विधिना मधुपर्केण आग्निकः । ६४
कंसे त्रितय मासिच्य कंसेन परिसंवृतम् ।
परिश्रितेषु देयः स्यान्मधुपर्कु इति ध्रुवम् । ६५
मधुपर्के तथा सोमे अप्सु प्राणाहुतीषु च ।
अनुच्छिष्टो भवेद्विप्रो यथा वेदविदो विदुः । ६६
प्राणाहुतिषु सोमेषु मधुपर्के तथैव च ।
आस्यहोमेषु सर्वेषु नोच्छिष्टो भवति द्विजः । ६७

दधनि पयसि वा कृतान्नं
मधु दद्यान्मधुपर्क मेव माहुः ।
दधिमधूदके वापि सक्ता-
वितोद्गते विहितास्त्रयस्तु मन्त्याः । ६८

पवित्रान्तर्हितं कृत्वा चरुं प्राज्ञोभिघारयेत् ।
उद्वास्य चैवं विधिना एवं तन्त्रं न लुप्यते । ६९
चतुर्मुष्टिश्चरुः कार्य्यश्चतुर्णा मुत्तरोऽपि वा ।
कपालस्य प्रमाणेन अपूपानष्टकाविधौ । ७०
चतुर्भागं पाणितलात् कपालं याज्ञिका विदुः ।
पृथक्कपालान् कुर्वीत अपूपानष्टकाविधौ । ७१
वपाहोमे मुखे चैव होमे स्विष्टकृते तथा ।
व्याहृतीर्न प्रयोक्तव्या मुखे नाप्सु च लक्षणम् । ७२
सन्ततः प्रणवः कार्य्यः पितृयज्ञेषु ब्राह्मणैः ।
उपांशुकरणश्चापि सह कर्त्रा समस्वरैः । ७३
कालातीतेषु होमेषु उत्तरेष्वागतेषु च ।
कालातीतानि हुत्वैव उत्तराणि समारभेत् । ७४
यान्यतीतान्यतिक्रम्य उत्तराणि समारभेत् ।
न देवाः पितरस्तस्य प्रतिगृह्णन्ति तद्धविः । ७५
प्रक्रमणे तथोद्वाहे होमे स्विष्टकृते तथा ।
यस्यां दिशि विधिं प्राहुस्ता माहुरपराजिताम् । ७६
अयुक्त मन्त्रलवणैरपर्य्युषित मेव च ।
हविष्य मेतदन्नाद्य मसुरैश्चाप्यसंयुतम् । ७७
द्रुत्त्वः सर्वखल्वास्य कोद्रवा वरटैः सह ।
अकृताग्रयणे भक्ष्या येषां नोक्ता हविर्गुणाः । ७८

नवयज्ञेऽधिकारस्थाः श्यामाका व्रीहयो यवाः ।
नाश्नीयान्न च हुत्वैव मन्येष्वनियमः स्मृतः । ७९
श्राद्धे ब्राह्मण एकश्चेत् स्वल्पञ्च प्रकृतं यदि ।
वैश्वदेवं कथं तत्र इति मे संशयो महान् । ८०
प्रणीतान्नाय मुद्धृत्य सर्वस्य प्रकृतस्य तु ।
ब्राह्मणाय प्रदातव्य मेवं भवति सम्पदे । ८१
यद्येकं भोजयेच्छ्राद्धे छन्दोगं तत्र भोजयेत् ।
ऋचो यजूंषि सामानि त्रैविद्यं तत्र तिष्ठति । ८२
ऋग्भिस्तु पितरः प्रीता यजुर्भिस्तु पितामहाः ।
सामभिः प्रपितामहास्तस्मात्तं तत्र भोजयेत । ८३
अटंत पृथिवीं कृत्स्नां सशैलवनकाननाम् ।
लभेत यदि पित्रर्थे साम्ना म न्त्रचिन्तकाम् । ८४
दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणाश्च विशेषतः ।
नैते निर्माल्यतां यान्ति नियोज्यास्तु पुनः पुनः । ८५
दर्भाः पिण्डेषु निर्माल्या विप्राः प्रेतान्नभोजने ।
मन्त्राः शूद्रेषु निर्माल्यानिर्म्माल्याश्चितिपावकाः । ८६
पिण्डार्थं ये स्तृता दर्भास्तर्पणान्तु कृतन्तु यैः ।
धृतैः कृते च विण्मुत्रे त्यागस्तेषां विधीयते । ८७
उरसि पितरो भुङ्क्ते वामपार्श्वे पितामहाः ।
प्रपितामहा दक्षिणतः पृष्ठतः पिण्डतर्षुकाः । ८८

२०, १८१

क्षुते निष्ठीवने चैव दन्तोच्छिष्टे तथानृते ।
पतितानाञ्च सम्भाषे दक्षिणं श्रवणं स्पृशेत् । ८९
मरुतः सोम इन्द्राग्नी मित्रावरुणौ तथैव च ।
एते सर्वे च विप्रस्य श्रोत्रे तिष्ठन्ति दक्षिणे । ९०
आत्मतन्त्रेषु यन्नोक्तं तत् कुर्य्यात् पारतन्त्रिकम् ।
विशेषाः खलु सामान्या ये चोक्ता वेदवादिभिः । ९१
ऊनो वाप्यतिरिक्तो वा यः स्वशाखोक्त माचरेत् ।
तेन सन्तनुयाद् यज्ञं न कुर्य्यात् पारतन्त्रिकम् । ९२
यः स्वशाखोक्त मुत्सृज्य परशाखोक्त माचरेत् ।
अप्रमाण मृषिं कृत्वा सोऽन्धे तमसि मज्जति । ९३
पुनरुक्त मतिक्रान्तं यच्च सिंहावलोकितम् ।
गोभिले येन गृह्णन्ति न ते ज्ञास्यन्ति गोभिलम् । ९४
गोभिलाचार्य्यपुत्रस्य योऽधीते संग्रहं पुमान् ।
सर्व्वकर्म्मस्वसंमूढः परां सिद्धि मवाप्नुयात् । ९५ ।

इति श्रीगोभिलाचार्यपुत्रप्रणीते गृह्यासङ्ग्रहे
द्वितीयः प्रपाठकः समाप्तः ॥

॥ समाप्तश्चायं गृह्यासंग्रहः ॥

---

# ॥ अथ आग्नेयसामानि ॥

## ॥ सब्राह्मणानि ॥

---

१
॥ ओ३म् ॥

॥ गायत्रम् । चतुर्गानग्रन्थेभ्यः पृथक् । ब्रा० ८,१० ॥

१ २ १ २ २ २ —
तत्सवितुर्वरेणियोम् । भार्गोदेवस्यधीमाहो२ ।
१२ २ २ १ — १
धियोयोनःप्र । चो५१२१५२ । हुम् । आ२ । दायो ।
२ १ १ १ १
आ३४५ ॥

गायत्रीषु ब्रह्मवर्चसकामायोक्थानि प्रणयेयुर्गायत्रां ब्रह्मसामानुष्टुभ्यच्छावाकसाम सैषा गायत्री सम्पद्यते तेजो ब्रह्मवर्चसं गायत्री तेज एव ब्रह्मवर्चसमवरुन्धे ॥ १ ॥

॥ यशस्सामनिधनम् । आर० २,२,१२ । ब्रा० ५,६ ॥

१२ २ २ २ २ १२ २ १ २
आयुर्विश्वायुर्विश्वंविश्वमायुरश्नी महिप्रजान्त्वष्टरधि
१ २ २ १२२ १ १ २२ १ २२ १ ३ १ १ १ १
निधेह्यस्मेशतञ्जीवेमशरदोवयन्ते २३४५ ॥

शतायुर्वै पुरुषः शतवीर्य्यस्त मुल्लिखेत् प्राणाय त्वा ऽपानाय त्वा व्यानाय त्वेति प्राणापानव्यानानेव तदात्मन्नवरुन्धते ॥ २ ॥

॥ आश्वम् । ज० १,२,११ । आ० ११,२ ॥

१ २ — १ २ १२ २ —१
अभिद्रोणा२निबभ्रवाः । शुक्राऋतस्यधारा२या ।
२२ १ २ २ १ २ऽ २ ३ १ १ १ १
वाजङ्गोमा२३न्ताम् । आचा३उवा३ । रा२३४५न् ॥

आश्वं भवत्यश्वो वै भूत्वा प्रजापतिः प्रजा असृजत स प्राजायत बहुरभवत् प्रजायते बहुर्भवत्याश्वेन तुष्टुवानः ॥ ३ ॥

॥ सोमसाम । ज० १, ,१२ । आ० ११,३ ॥

१ २ २ ३ २ १ २ २
सुताइन्द्रा । यवायवायि । वारुणाया३मा३ ।
२ ३ २ १ २ ५ ४
रुज्ञियाः१ सोमाआर्षा३४ । हाउ । तुवापूयिष्णा
५ ४
वायि । होऽ५इ । डा ॥

सोमसाम भवति यथा वा इमा अन्या ओषधय एवꣳ सोम आसीत् स तपोऽतप्यत स एतत्सोम-

सामापश्यत् तेन राज्य माधिपत्य मगच्छद्यशोऽभव-
द्राज्य माधिपत्यं गच्छति यशो भवति सोमसाम्ना
तुष्टुवानः ॥ ४ ॥

॥ श्यैतम् । गे० ६,१,३२ । ब्रा० ११,८ ॥

४ ३ ४ ५र ३ २ ३र४र ५ १ २
अभिप्रवःसुरा । धसा३४औहोवा । आयिन्द्रमर्च्च ।
१ ७ ५ ५ १र २ १ २ १
यथाविदा२३४यि । ओ६हा । योजरितृभ्यः । माघा
२ १ ॒ ३ ५ २ १ र २ २
२३वा । पुरू२ । वा२३४सुः । सहस्रेणायिवा३शा ।
१ २ १ ॒ ३ ५र र ३ ५
ऊम्मायेइ । चा२ता२३४औहोवा । वा२३४सू ॥

श्यैतं भवति साम्नोर्विवाहो यज्ञस्य सन्तत्यै ॥५॥

॥ श्यैतनौधसम् । ज० २२,१,११,१ । ब्रा० ७,१० ॥

४ ३ ४ ५र ३ २ ३र४र५ १ २
अभिप्रवःसुरा । धसा३४औहोवा । आयिन्द्रमर्च्च।
२ १ ७ ५ ५ १ २ १ २
यथाविदा२३४यि । ओ६हा । यो२३जा । रीतृभ्यः ।
१ २ १ २ ॒ ३ ५ १ २ १ र २ १
मघ । वा । पुरूवा२३४सूः । सा२३हा । स्रेणेवशो
५ ३ ५
२३४वा । चा२३४तो ॥

इमौ वै लोकौ सहास्तां तौ वियन्ता वब्रूतां विवाहं विवहावहै सह ना वस्त्विति तयो रय ममुष्मै श्यैतं प्रायच्छन्नौधस मसा वस्मै तत एनयोर्न्निधने विपर्यक्रामतां देवविवाहो वै श्यैतनौधसे प्रवसीयाᳬसं विवाह माप्नोति य एवं वेद ॥ ६ ॥

॥ वैराजम् । ऊह्य० १,१,१०,३ । ग्रा० १२,१० ॥

२र र र र र २र ३ १
होयिया । होइया । होइया३४३बोध । सुमायि ।
२ १ २ १ र २र १ र २र १ र २र
मघवन्वा । चमेमाम् । चमेमाम् । चमेमाम् ।
२र १र २ १ २ १ र २र २र १र
बोधासुमायि । मघवन्वा । चमेमाम् । ३ । बोधासु
२ १ २ १ र २र २र १र २र १
मायि । मघवन्वा । चमेमाम् ।३। यान्तेवसायि । श्ठोश्चर्च
२ १ २ १ २ १ २
तायि । प्रशस्तिम् । प्रशस्तिम् । प्रशस्तिम् ।
२र १र २ १ २ १ २ १ २
यान्तेवसायि । श्ठोश्चर्चतायि । प्रशस्तिम् । प्रशस्तिम् ।
१ २ २र १र २ १ २ १
प्रशस्तिम् । यान्तेवसायि । श्ठोश्चर्चतायि । प्रश
२ २ १र २ १ र २ १ २
स्तिम् । ३ । इमाब्रह्मा । सधमादायि । जुषस्व । ३ ।
१ २र २ १ र २ १ २ ११र
इमाब्रह्मा । सधमादायिजु । षस्व । ३ । इमाब्रह्मा ।

२ १ र २ १ २ १ २ १
सधमादायि । जुषस्व । ३ । इयाहाउ । २ । इय
र ५ २ ३ १ १ १ १
बोधमत्स्वा३ । हाउवा३ । इ२३४५ ॥

वैराजं साम भवति विराट्सु स्तुवन्ति वैराजा विष्टम्भाः समीचोर्विराजो दधात्यन्नाद्यायानुतुन्नं गायति रेतोधेयायानुतुन्नाद्धि रेतो धीयते दक्षिण ऊरा वुन्नातुरग्निं मन्थन्ति दक्षिणतो हि रेतः सिच्यत उपाकृतेऽहिङ्कृते मन्थन्ति जात मभि हिङ्करोति तस्माज्जातं पुत्रं पशवोऽभि हिंकुर्वन्ति तस्मै जातायासोमाःसन्त गार्हपत्ये प्रहरामा३ आग्नीध्रा३ आहवनीया३ इत्याहवनीये प्रहरन्त्येतदायतनो वै यजमानो यदाहवनीयः स्व मेव तदायतनं ज्योतिष्मत्करोति ज्योतिष्मान् ब्रह्मवर्च्चसी भवति य एवं वेदाभिजुहोति शान्त्या आज्येनाभिजुहोति तेजो वा आत्मन्तेज एव तदात्मन् धत्ते ॥ ७ ॥

७

॥ आयन्तीयम् । ऊ० ५,२,८,३ । ब्रा० १५,४ ॥

२ र २ १ — १ — १ —
भद्राइन्द्रस्यरा१तायाः । भद्रा२इन्द्रा२ । स्यरा२

१ १ २ र १ २ १ २ —
ताया: । योअस्यकामंविधत: । नरोषाऽ१ता२यि ।
१ २र १र र २ र १ १ २ १र २ ३
मनोदानायचोदयन् । मा२३ना: । दानाया३चो ।
१ ३ २ १ ५ ३ १ १ १ १
हुम् । दया३ । ओ२३४वा । हे२३४५ ॥

आयन्तीयं भवति श्रीर्वै आयन्तीयं श्रीर्न्नवम मह: श्रिय मेव तच्छ्रियां प्रतिष्ठापयति ॥ ८ ॥



॥ यद्वाहिष्ठीयम् । ऊ० ५,२,२०,३ । ब्रा० १५,५ ॥

१ र २र १र २र र १ २ १र
इन्द्रायसोमपातवे । इन्द्रायसोवा । मपातवायि ।
२ १ १ र २
वृत्रघ्ना२३यिपा । रिषिच्यसायि । नरेचा२३दा ।
१र २ र २ १र २
क्षिणावतायि । वीरायी२३सा । दनासा२२दा३४३
१
यि । ओ२३४३ । डा ॥

यद्वाहिष्ठीयं भवति ब्रह्मयशसं वा एतानि सामान्यचा आचीर्याणि ब्रह्मयशसी भवति यद्वाहिष्ठीयेन तुष्टुवान: ॥ ९ ॥

॥ कवतीषु रथन्तरम् । ऊह्य० १.७,८,३ । ब्रा० १५,१० ॥

१ १ २ र र र १
स्तोवा । भीषुणास्सखीनामविताज । रितृ२३
२ १ २ १ ४ १ र र
णाम् । शातम्भवा२३४सौ३ । ऊता२३४या । ओ
५ ५
वा६ । हाउवा ॥

वामदेव्यस्यर्च्चु रथन्तरं पृष्ठं भवति गायत्री वै रथन्तरस्य योनिः स्वाया मेव तद्योनौ रथन्तरं प्रतिष्ठापयति तेजो वै गायत्री छन्दसां तेजो रथन्तरꣳ साम्नां तेजश्चतुर्विꣳशस्तोमानां तेज एव तत्सम्यक् सन्दधात्यपि ह पुत्रस्य पुत्रस्तेजस्वी भवति ॥ १० ॥

॥ अग्निष्टोमसामनिधनम् । आर० ६,२,६ । ब्रा० १६,७ ।

२ १ र र र २ र ३ १ १ १ १
ए३ । सर्वान्कामानश्नीमही२३४५ ॥

पञ्चविꣳशोऽग्निष्टोमः सर्वजिता वै देवाः सर्वमजयन् सर्वस्याप्त्यै सर्वस्य जित्यै सर्व मेवैतेनाप्नोति सर्वं जयति ॥ ११ ॥

॥ आत्रेयम् । ऊ० १६,१,१०,३ । ब्रा० २१,८ ॥

२ र १ २ १ २र १र २
तुवन्द्याऽग्ना । मंहिवा२३ता । पार्थिवीऽग्ना । ति
१ २ १ र १ ७ —
जभी२३षायि । प्रतिद्रापिम् । आमुऽग्नाथा२: ।
१र ३ २ ४ ५ ४ ५
पवामा३ना३ । महोवा । त्वा५नो६हायि ॥

अत्रिरकामयत चत्वारो मे वीरा आजायेरन्निति स एत मपश्यत्तस्य चत्वारो वीरा आजायन्तास्य चत्वारो वीरा जायन्ते य एवं वेद ॥ १२ ॥

॥ पित्र्यम् । आर० ६,२,१७ । ब्रा० २४,१० ॥

१ २र १ २र १र २र १र २र १ २ १र २ १ २ १
वाक्मनःप्राणःप्राणोपानोव्यानश्चक्षुःश्रोत्रꣳशर्मव
र १र २ १र
र्मभूतिप्रतिष्ठा ॥

एता एव समहाव्रताः सर्वा वा एता विराजो दशिनी प्रथमा विꣳशिनी द्वितीया त्रिꣳशिनी तृतीयैषा वै परमा विराड् यच्चत्वारिꣳशद्रात्रयः पङ्क्तिर्वै परमा विराट् परमाया मेव विराजि प्रतितिष्ठन्ति ॥ १३ ॥

॥ त्वाष्ट्रीसाम । गे० १६,१,१६ । ब्रा० १२,५ ॥

५ र र २ २ १र २ २
सुतासोमा। धुमा३त्तमाः । सोमाइन्द्रा३यमा३।
२ २ ३ २ १ २ २ २ २ ३ २
ए३ । दिनआ । पवाइववा३न्तो३ । ए३ । चरन्ना ।
१ २ २ २ २ ३र २
दाइवान्गच्छा३न्तुवा३ः । ए३ । मदाआ ॥

त्वाष्ट्री साम भवति इन्द्रं वा अच्यामयिणं भूतानि नास्वापयꣳस्त मेतेन त्वाष्ट्रोऽस्वापꣳस्तदाव तास्तर्ह्यि- कामयंत कामसनि साम त्वाष्ट्रीसाम काम मेवैतेना- वरुन्धे ॥ १४ ॥

॥ सोमव्रतम् । आर० ४,१,१० । सा० ब्रा० २,८ ॥

१ र र २र र १ २र १ २ १र २
त्वमिमाओषधीःसोमविश्वाः । त्वमपोअजनय-
१ र १ र १र १ २ १ र २र
स्त्वङ्गाः । त्वमातनोरुर्वन्तरिचम् । त्वञ्ज्योतिषा
१ र २
वितमोववर्थ ॥

कृष्णपञ्चम्या मुदिते सोमे त्वमिमा ओषधीरि- त्येतेनाभिजुहुयात्सहस्रकृत्वः शतावर मेतेनैवाभिगो- योङ्कृत्य सभार्यः प्राश्नीयात् सुरूपान् दीर्घायुषः पुत्रां- ल्लभते ॥ १५ ॥

॥ प्रासाहम् । गे० २,२,१७ । ब्रा० ३,७ ॥

५ २ र २ ३र ५र ३ ४ ३र
अरण्योः । निहितोजा३४३ । तवेदाः । गर्भइवे
४ ५र ३ ५ २ १र र र ७
त्सुभृतोग । भिणा२३४यिभीः । दिवेदिवईडाजाग्ट
२ ३ ५ ३ ५ ५ ४र
वा२३ङ्गीः । हा२३४वी । ष्मा२३४ङ्गीः । मनुष्येभ्
४ ५र ५ ५
भिरग्निः । एहिया६हा । हो५इ । डा ॥

अथ यद्गर्भिण्यो वाग्वै धेनुर्मन्त्रो गर्भो वाच्येवास्य मन्त्रं दधात्यामन्त्रणीयो भवत्यथ यद्वेनुभव्या द्वादश पयाꣳसि तान्येवास्मिन् दधाति तस्मादाहुः पयस्वी राजा पुण्य इति ॥ १६ ॥

॥ जराबोधीयम् । ऊ० १६,१,१६,३ । ब्रा० १४,५ ॥

२र १र १ २ १र २ १ २ १ २
मानोअग्नोवा । महाधनायि । परावा२३र्ग्भा ।
१ १ २ ४ ५ ३ २
रभृद्यथा । संवागा१ꣳसा२३ꣳरा । यिम् । जयो३
४५इ । डा ॥

जराबोधीयं भवत्यन्नाद्यस्यावरुध्या अन्नं वै जराबोधीयं मुखं गायत्री मुख एव तदन्नं धत्तेऽन्न मत्त्वान्नादो भवति य एवं वेद ॥ १७ ॥

॥ बार्हदुक्थम् । ऊ० ४,२,१३ । ब्रा० १४,९ ॥

१ २र १ २ — १ १ र २ १
प्रहिन्वानक्ष्ट । ता२म्बृहात् । प्रहिन्वानक्ष्टतम्बृ-
२ १ ७ — १ ७ — १
२३हात् । नृभिर्यॅमा२ । गोहर्यतो२ । विचक्षणाः ।
र र २ १ २ १
राजादायिवाः । समुद्राया२३या३४५ः । ओ२३४५
ई । डा ॥

बार्हदुक्थं भवति बृहदुक्थो वा एतेन वाम्नेयो-
ऽन्नस्य पुरोधा मगच्छदन्नं वै ब्रह्मणः पुरोधान्नाद्यस्या-
वरुध्यै ॥ १८ ॥

॥ भरद्वाजस्यलोम । ऊ० ३,२,११,३ । ब्रा० १३,११ ॥

१ २ १र र २ १ —१ —
यास्या । वार्यमणाभा२३गाः । आये२नामी२ ।
२र र २१र २ १ —१ — र
तावरुणाकरामा२३हायि । आये२नामी२ । मा
र १र २ १ २ १ २र १
वरुणाकरामा२३हायि । आ२३यिन्द्राम् । अवसेमा
५ ५
२३४हो६हायि ॥

भरद्वाजस्य लोम भवति पशवो वै लोम पशूना मव-
रुध्यै तदु दीर्घमित्याहुरायुर्वै दीर्घमायुषोऽवरुध्यै ॥ १९ ॥

॥ मधुश्चुग्निधनम् । ज० ३,२,१४,३ । ब्रा० १३,११ ॥

२र र र २ २ र र र १
सुष्वाणासोवियद्रिभा३यिरे । चितानागो३रा

२ २ २ ५ २ २ १ २—
धिलचा३ । हा३हा । औ३हो३वा । आयिही२ ।

२ १ २ २ २ ५ २ २
इषमस्मा३भ्यामभिता३ः । हा३हायि । औ३हो३वा ।

१ — १ २ २ २ ५ २ २
आयिही२ । सामस्वरा३न् । हा३हा । औ३हो३वा ।

१ — २१ ३ ५र र २ १
आयीही२ । वसु । वा२यिदा२३४औहोवा । मधुश्चु

३ १११ १
ता२३४५ः ॥

मधुश्चुग्निधनं भवति परमस्यान्नाद्यस्यावरुध्यै परमं वा एतदन्नाद्यं यन्मधु प्रजापतेर्वा एतौ स्तनौ यद् घृतश्चुग्निधनं च मधुश्चुग्निधनं च यज्ञो वै प्रजापतिस्तमेताभ्यां दुग्धे यं कामं कामयते तं दुग्धे ॥ २० ॥

॥ गौतमस्यभद्रम् । अध्य० १,१,२० । ब्रा० १३,१२ ॥

२र १र २ १ २र १ २ १ २र१
आदित्यैरिन्द्रःसगणोमरुद्भी३ः । इहा । अस्मभ्यं

२र १र २ १ ३ २१
भेषजाकरा३त् । इहा । ए३ । भद्रम् ॥

गोतमस्य भद्रं भवत्याशिष मेवास्मा एतेनाशास्ते साम हि सत्याशीरेतेन वै गोतमो जेमानं महिमान मगच्छत् तस्माद्ये च पराञ्चो गोतमाद्ये चार्वाञ्चस्त उभये गोतम ऋषयो ब्रूवते ॥ २१ ॥

॥ मार्गीयवम् । गे० ३,२,१ । ब्रा० १४,९ ॥

५ र ४ ५ १ ३ २ ३ ५ १
तद्वौहोवा । गाया२ । सुतायिसा२३४चा । पुरु
२र र १ २ — १ १ २
हुता । यसात्वा१ना२यि । शंयत् । हा । औ३
२ ३ ५ १ ३ ५र २
होयि । गा२३४वायि । ना२शा२३४औहोवा । ए३ ।
१ १११
किने२३४५ ॥

मार्गीवयं भवति देवं वा एतं मृगयुरिति वदन्त्ये- तेन वै स उभयेषां पशूना माधिपत्यं माश्नुतोभयेषां पशूना माधिपत्य मश्नुते मार्गीयवेणा तुष्टुवानः ॥ २२ ॥

॥ वास्तुसाम ( कावषम् ) । गे० ७,२,२० । सा० ब्रा० ३,३ ॥

५र र २ १ १ २ ३ ५
वास्तोष्पतायि । ध्रुवा । स्थूणा । ओ१३४वा ।
१ २ र १र र १ र र र
अꣳसत्रꣳसोम्याना२म् । द्रप्सःपुराम्भेत्ताशश्वता२३

२र ३ ५ १ र २
डूनाम्। आ२३४इन्द्राः। मुनौ२। ना३१उवा२३।
३ ५
सा२३४खा ॥

बहुपशुधनधान्यहिरण्यमायुष्मत्पुरुषं वीरसूः सुभगा अविधवस्त्रीकꣳ शिवं पुण्यं वास्तु भवति ॥२३

॥ यशस्साम। आर० २.२,१२। ब्रा० ५,६ ॥

२र २ र र २ र र
हाउ।३। यशोहाउ।३। वर्चोहाउ।३।
१ २ १ १ २ — १र
आस्मिन्हायि।२। आस्मीन्हा३१उ। वा२। तवेदि
२र १ २ १ २ १ २१र २ १
न्द्रावमंवसु। त्वम्पुष्यसिमध्यमम्। सत्राविश्वस्यपरमस्य
२र १ २र १र २ र २र २र
राजसि। नकिष्ट्वागोषुवृण्वते। हाउ।३। यशो
र १ र र १ २ १
हाउ।३। वर्चोहाउ।३। आस्मिन्हायि।२।
१ २ — १र र
आस्मिन्हा३१उ। वा२। आयुर्विश्वायुर्विश्वंविश्व
र २ र १र २१२ १ र २ २र २ १ र २र १२र
मायुरशीमहिप्रजान्त्वष्टरधिनिधेह्यस्मे शतञ्जीवेमशरदो
१ ३ १ १ १ १
वयन्ते२३४५ ॥

भवति यशो यशसा ॥ २४ ॥

॥ धर्मसामनिधनम् । गे० ११,२,२० । ब्रा० १४,११ ॥

२ १ ११११
ए३ । धर्म्मा२३४५ ॥

धर्म भवति धर्मस्य धृत्यै ॥ २५ ॥

॥ बार्हद्गिरम् । आर० ३,१,२६ । सा० ब्रा० २,१ ॥

१ २र १र २ १ २र १ र २१र २ १र
पिबासोममिन्द्रमन्दतुत्वा । यन्ते सुषावहर्यश्वाँद्रिः ।
२र १ २र १ १र १ २र १र र
सोतुर्बाहुभ्याꣳसुयतोनार्वा ॥

त्रीन्वोदकाञ्जलीन् सदाचामेत्पिबासोममिन्द्र-
मन्दतुत्वेत्येताभ्यां दीर्घायुर्भवति ॥ २६ ॥

॥ यज्ञायज्ञीयम् । ज० १,१,१४ । ब्रा० ११,५ ॥

१ २ १ २ १ २ २ १
दाशे । माहा । व्या३दाता३यायि । भुव-
र —१ र २ १ २ २
द्वाजे१ष्ववि । ताभू१३वात् । हुम्मायि । वा३ईयि ।
१ र र ३ २ ११११
जतन्नाताततनू२नाउ । वा३४५ ॥

यज्ञायज्ञीयं भवति वाग्यज्ञायज्ञीयं वाचि यज्ञः प्रतिष्ठितो वाच्येव तद्यज्ञ मन्ततः प्रतिष्ठापयन्ति ॥२७

॥ प्लवः । गे० १४,१,३४ । ब्रा० ५,८; १४,५ ॥

हा । वो३हा । वो३हा३ । हा । ओ२३४वा । हायि । पूनाना२३४:सो । माधारा२३४या । आपो वा२३४सा । नोअर्षा२३४सी । आरत्ना२३४धाः । योनीमा२३४र्त्ता । स्यासीदा२३४सी । उत्सोदा२३४यिवो । हायिरण्या२३४याः । हा । वो३हा । वो३हा३ । ओ२३४वा । हा३४ । औहोवा । ए३ । अतिविश्वानिदुरितातरेमा२३४५ ॥

प्लवोऽन्वह भवति समुद्रं वा एते प्रस्नान्ति ये संवत्सर मुपयन्ति यो वा अप्लवः समुद्रं प्रस्नाति न स तत उदेति यत् प्लवो भवति स्वर्गस्य लोकस्य समष्ट्या अतिविश्वानि दुरिता तरेमेति यदेवैषां दुष्कृतं दुःशस्तं तदेतेन तरन्ति ॥ २८ ॥

॥ औशनम् । ऊ० १,१,४,३ । ब्रा० ७५ ॥

१ २ १ १२ २ १
आर्षी: । विप्रा:पुरएता । जना३नाम् । ऋभू

२र १ २ १ २र २ ३ ४ ५ १ र
र्धीरा: । उशना । काविियेना । सचिद्विवेदनिहिताम् ।

१ २ १ २ १ २ १ २
यदा२३साम् । अपायिचियाम् । गुहियम् । ना३४३ ।

२ ४
मा३गोपूना६५६म् ॥

अथ वायु रौशनं प्रावृहत तद्वै स प्राणवीर्य्यं प्रावृहत प्राणा वा औशनꣳ सर्व मायुरेति य एवं वेद वायुर्वा उशꣳस्तस्यैतदौशन मुशना वै काव्यो ऽसुराणां पुरोहित आसीत्तं देवा: कामदुघाभिरुपामन्त्रयन्त तस्मा एतान्यौशनानि प्रायच्छन् कामदुघा वा औशनानि कामदुघा एन मुपतिष्ठन्ते । य एवं वेद ॥ २९ ॥

॥ वरुणसाम । ऊ० ३,२,४,२ । ब्रा० १३,९ ॥

२ र १ २ १ २ १ र २
वृषाअचिक्रदद्वनोवा । ओवा । वार्षोअचि ।

१ २ १ २ १ २ १ २र
क्रदाहा१नार्यि दा२३ यिवा । ना२३ꣳसो । मपत्रमा ।

[illegible] गो२३भाचि: । [illegible] । औ३ । हो३१२३४ । वा ।

षा५ सोई२हायि ॥

वरुणसाम भवत्येतेन वै वरुणो राज्य माधिपत्य मगच्छद्राज्य माधिपत्यं गच्छति वरुणसाम्ना तुष्टुवानः ॥ ३० ॥

॥ शुद्धाशुद्धीयम् । गे० ६,२,७ । ब्रा० १४,११ ॥

४र ५र ४ ५ ४ ५र ५ २ १ र २ १ २ २ १र
एतोन्विन्द्रꣳस्तवामा । शुद्धꣳशुद्धेनसा२३म्ना । शुद्धै
र र २ १ २ १र २ १
रुक्थैर्वावृधा२३ꣳसाम् । शुद्धै रा२३शी३ । र्वा२न् ।
३ २ ५र र ३ १ १ १ १
ममा३४औहोवा । तू२३४५ ॥

१
शुद्धाशुद्धीयं भवतीन्द्रो यतीन्त्सालावृकेयेभ्यः प्रायच्छत्त मश्लीला वागभ्यवदत्तस्सोऽशुद्धोऽमन्यत स एतच्छुद्धाशुद्धीय मपश्यत्तेनाशुध्यच्छुध्यति शुद्धाशुद्धीयेन तुष्टुवानः ॥ ३१ ॥

विशोविशीयम् । ज० ५,१,१०,३ । ब्रा० १४,११ ॥

२र र र १२ २ १२
आपाहूम् । ओ३मा । ना३सुष्टू३तीम् । इष्टि
र १ २ १ २ २ १
दे । वायिभा२३याः । हुम्मायि । दू३वा३ः । आ२
२५ १ ३ २ ३ ५
३४यिषेहायि । ओ । हुवायि । पा२३४वा ।
१ २ २ १ ५र ५
हुम्मां । स्वा३सा३म् । या२३४ताम् । एहिया६हा ।
४
होभ्५ । डा ॥

विशोविशीयं भवत्यग्निरकामयत विशोविशो ऽतिथिः स्यां विशोविश आतिथ्य मश्नुवीयेति स तपोऽतप्यत स एतद्विशोविशीय मपश्यत्तेन विशोविशो ऽतिथि रभवद्विशोविश आतिथ्य माश्नुत विशोविशो ऽतिथि र्भवति विशोविश आतिथ्य मश्नुते विशोविशीयेन तुष्टुवानः ॥ ३२ ॥

॥ पर्कपुष्पम् । गे० १६,२,३४ । ब्रा० १५,३ ॥

२ १ २र १ २ १ २ १ १
पवित्रन्तेविततंब्रह्मणस्पते३ । हुवे२३ ।ऽ२ । हो
२ २ २ १ र २र १ २ १
वा३हा३ । ध्वरि । प्रभुर्गात्राणिपर्येषिविश्वता२३ः ।

१ २ २

होवा३हा३ । हो[illegible]

[illegible]न३ । हुवे२३ । २ । [illegible]२हा३ । [illegible]

२ १र [illegible] १ [illegible] १

श्रृतासइन्द्रहन्तःसन्तदा२शत । हुवे२३ । २ । होवा३

३ २ ५र र २ १र र र र ऽ १र र ऽ

हा३ । हा२३औहोवा । अर्कोदेवाना२म्परमेतियो२

३ १ १ १ १

मा२३४५न् ॥

अर्कपुष्पं भवत्यन्नं वै देवा अर्क इति वदन्ति रस मस्य पुष्प मिति स रस मेवान्नाद्य मवरुन्धे ऽर्कपुष्पेण तुष्टुवानः ॥ ३३ ॥

॥ देवस्थानम् । आर० १,१,१५ । बा० १५,२ ॥

२र र २ १ २ १

हाउपिबासुता । स्यरसिना३ः । होयि । ३ ।

२ऽ १ र १ र २ १र

हाउहाउहाउवा । महोनरः । मरुत्वानइन्द्रगोम

२ १ २ ऽ २ १ र

ता३ः । होयि । ३ । हाउ । ३ । वा । सत्यमोजः ।

२र १ र २र १ २ १ २ ऽ

आपिन्नोंबोधिसधमा३ । होयि । ३ । हाउ । ३ । वा ।

१ र २ २ १ २ १ २ ऽ

स्वर्ज्योतिः । द्वियेवृधे३ । होयि । ३ हाउ । ३ । वा ।

२ १र २ र १ २ १

एस्यादिदेव ।३। अस्माꣳ[illegible]हायि ।२।

२र २ १ २र

[illegible]ꣳ ।ꣳ। वाम्योरक्रान्भूमिरततनत्समुद्रꣳसमचूकुपत् ।

१ १ १ १

इट्[illegible] २३४५ ॥

देवस्थानं भवति प्रतिष्ठायै सङ्कृति भवति सꣳस्कृत्या अङ्गवा एतद्बलीयत तद्देवा देवस्थाने तिष्ठन्तः सङ्कृतिना समस्कुर्वꣳस्तत्सङ्कृतेः सङ्कृतित्वं देवस्थानेन वै देवाः स्वर्गे लोके प्रत्यतिष्ठन्त्स्वर्गे लोके प्रतितिष्ठामेत्येतद्वरुणाय देवता राज्याय नातिष्ठन्त स एतद् देवस्थान मपश्यत्ततो वै तास्तस्मै राज्यायातिष्ठन्त तिष्ठन्त्यस्मै समानाः श्रैष्ठ्याय चक्षुस्येवास्य प्रकाशो भवति प्रतितिष्ठति य एवं वेद ॥ ३४ ॥

॥ आकूपारम् । गे० ५,१,१८ । ब्रा० १५,५ ॥

४र र ५ ४ ५ ५ २ १ र

आतूनइ । द्रचुमाद्त्ताम् । चित्रङ्गाभꣳसङ्

— १ २ १ र १ २ २

भा२या । चित्रङ्गाभꣳसम् । गृ । औ३हायि ।

३ ५ ३र १ र र १ २र १

भा२३४या । एहोयि । महाहस्तीदचा२३होयि । औहो ।

२र ५ ४ ५ ५ ७

वाहो२३४था । आपूयिता॒होयि ॥

यातून इन्द्रह्मुमन्त मित्याकूपार [illegible] सौ[illegible] [illegible] तेन [illegible] च समक[illegible] [illegible] [illegible] ग्रामाकुर्वते स [illegible] सम्पृच्छते ॥ ३५ ॥

॥ त्रिणिधनमाग्नेयम् । ऊ० ३,१,८,३ । ब्रा० १२,२ ॥

२र र          ४ ३ ५        २र १र
सोमोदुग्धा । भायिरा२३४चाः । सोमोदुग्धा

२          ३ ५        २ ३ ५
भिरा३१उवा२३ । आ२३४चाः । सामूद्रा२३४न्ना ।

२ १ र          ३ ५        १ ३
संवरणानिया३१उवा२३ । आ२३४ग्मान् । मान्दीमा

५ २ १          ३ ५
२३४दा । यतो३आउवा२३ । शा२३४ते ॥

त्रिणिधमाग्नेयं भवति प्रतिष्ठाया अग्निः सृष्टो नोददीप्यत तं प्रजापति रेतेन साम्नोपाधमत्स उद्दीप्यत दीप्तिश्च वा एतत् साम ब्रह्मवर्चसञ्च दीप्तिञ्चैवैतेन ब्रह्मवर्चसञ्चावरुन्धे ॥ ३६ ॥

॥ दूषोडधीयम् । ऊ० ३,१,१८,२ । ब्रा० १३,९ ॥

२ र          र १        २ १
रसन्तेमायि । चोअर्यमा । दिवंभूवा२ । रुणः

१ २ १ — १ १ २ ५
कावायि । प[illegible] । रू२ता२३४ औहोवा ।
२ १र २
ड्डषो६ २ ॥

३४।

द्धषोवृधीयं भवति पशवो वा द्धषोवृधीयं पशूना मवरुध्या द्धषे वै पश्वम मद्दर्वृधे षष्ठ मवद्धन्त प्र्योतर्हि यजमान मेवैतेन वर्द्धयन्ति ॥ ३७ ॥

॥ द्रविणसाम । गे० २,१,२४ । ब्रा० ६,२ ॥

५र ४ २ ४ ५र २र १र २ र १ २
देवो३वो३द्रविणोदाः । पूर्णांविवष्ट्वासिचम् ।
१ २ — १ २र १ ० —
उद्वा१सिञ्चा२ । ध्वमुपवापृणाध्वम् । आदिद्वोदे२ ।
१ र २र १ २ १
वओहते । इडा२३भा३४३ । ओ२३४५इ । डा ॥

यो वा अधिपतिं वेदाधिपतिर्भवति चर्यस्मिंश्शो वै स्तोमाना मधिपतिः पुरुषः पशूनां तस्माद्यन्नो ऽन्ये पशवोऽदन्त्यूर्द्धः पुरुषोऽधिपतिर्हि सोऽधिपतिः समानानां भवति य एवं वेद ॥ ३८ ॥

॥ आग्ने[redacted]नि ॥

[redacted]म ( दिग्रांवतम् ' । आर० ५,? [redacted]

हाउ । [redacted]

ए । अहं॑सु[redacted] ॥

पूर्व मु चैव तद्रूप मंपरेण रूपेणानुवदति य[redacted]

पूर्वं॑ रूप मपरेणानुवदति तदनुरूपस्यानुरूपत्व मनु-
रूप एनं पुत्रो जायते य एवं वेद ॥ ३९ ॥

॥ आयुःसाम ( प्राणः ) । आर० २,२,१ । ब्रा० ५,४ ॥

२र १र १र २ १
हाउ । ३ । आयुः । ३ । सात्यम् । ३ । इन्द्र-
२ १ २र ३ ४ ५ २ १र २ १
न्नरो । ने३मधि । ताहवन्ताइ । यत्पारिया: । युनज ।
२ ३ ४ ५ २र १र २ १ २ ३ ४र ५
ताइधियस्ताः । शूरोन्नृषा । ता३श्रव । सश्वकामाइ ।
२र १र २ १र २र ३ ४ ५ २र
आगोमताइ । व्रजेभ । जातुवन्ना: । हाउ३ ।
१र र ३ २ ५र र
आयुः । ३ । सात्यम् । ३ । सत्या३४ । औहोवा ।
३ १ १ १११
ई२३४५ ॥

प्राण मेव तज्जयन्ति ॥ ४० ॥

॥ वार्त्रघ्नीयम् । ज० १४,१,७,३ । ब्रा० २०,३ ॥

२ र र २र १ २ ३ ५
विष्णोःकर्म्माऔहोहायि । णाय्यिपश्या२३४ता ।
२ १ ५ १र २ ३र ४र ५ १ २
यतोव्रा२३हा । तानिपस्पा३४ । औहोवा । ईहा२
५ २ ३ ५ २ १ २ १ ७ २
३४हायि । उहुवा२३४हायि । इन्द्रस्य । यूजियस्या
३र ४र ५ १ ३ ५ ३र २
३४ । औहोवा । ईहा२३४हायि । औहो३१२३४ ।
५र ४ ४
वाऽ । एहियाइहा । होपूई । डा ॥

एतेन वै देवा जेत्वानि जित्वा यं यं काम मका-
मयन्त तं त मापुवन् यं कामं कामयते त मेते-
नाप्नोति ॥ ४१ ॥

॥ ...वनिधनम् । आर० २,१,८ । ब्रा० १८,१ ॥
२र १र २ र १र १ र ३ १ १ १ १
ए । राज...मेमस्वराजङ्गमेमा२३४५ ॥

यो राज्य आशꣳसमानो राज्यं न प्राप्नुयात् स
एतेन यजेत राजैवैनꣳ राजानं करोति ॥ ४२ ॥

॥ सौमित्रम् । ज० १,१,१७,१ । ब्रा० १३,६ ॥
२र र २ ४ २
सौमित्रम् । औहोहोयि । औ३हो३यि । ओ३
१ — १र २र ३ १ १ १ १ १
२३४५वा६५६ । इन्द्रा२यसामगायता२३४५ । वि
— १र २ २ १ — १ १ १ १ १ २
प्रा२यबृहतेबृहा१त् । ब्रह्मकृते२विपश्चिते२३४५ । ए३ ।
२ १ १ १ १ १
पनस्यवे२३४५ ॥

कामसनि॰साम सौमित्रं काम मेवैतेनावरुन्धे ॥ ४३

॥ महावैश्वामित्रम् । ग्री० ८,१,२२ । ब्रा० १२,६ ॥

२ १ २ २ १ २ १ १ १ १ २

हयायेऽ३ । हयायेऽ३ । हया२३४५ । हउ२३ ।

१ ३ ४२ ५ २ ३ २ ० १

आ२३४यि । द्रविश्वाअवी । वृधा३न् । सा२३४ ।

३ ४ ५ ३ २ १ ३२ ४ ५ २

मुद्रव्यचसम् । गिरा३ः । रा२३४ । धोतमउरथी ।

२ १ २ २ ३ ४ ५ ३ २

ना३म् । वा२३४ । जानाउसत्पतिम् । पता३यिम् ।

२ १ २ २ १ २ १ १ १ १ ३ १ १ १ १

हयायेऽ३ । हयायेऽ३ । हया२३४५ । हउ२३४५ ।

२ ५ २ ५ २

होऽ४इडा । होऽ४इडा । हो२३४५इ । डा ॥

महावैश्वामित्रं भवति पाप्मानं वा यदमही-यन्त तन्महावैश्वामित्रस्य महावैश्वामित्रत्वम् ॥४४॥

॥ महादिवाकोर्त्यम् । आर० ६,१,१७ । ब्रा० १,२ ; ६,६ ॥

१ऽ ५ १ २ १२

द्यौः । ३ । अन्तरिक्षम् । ३ । भूमिः । २ ।

३२ २ ५२ २ २ १२ ३ ऽऽऽऽ

भूमा३४ । औहोवा । ए३ । आयुषे२३४५ ॥

आयुषे मे पवस्व वर्चसे मे पवस्व विदः पृथिव्या दिवो जनित्राच्छृण्वन्त्वापोधः चरन्तीः सोमेहोद्गाय ममायुषे मम ब्रह्मवर्च्चसाय यजमानस्यर्द्ध्या अमुष्य राज्याय ॥ ४५ ॥

॥ सूर्य्यसाम । ऊह्य० २,१,१४ । ना० १५,११ ॥

१ २ १र २ र १ र २ १र २
बण्महाँ३असिसूर्य्य । बडादित्यमहाँ३असि ।
१ र २ १र २ १र २ १र र २ १र २
महस्तेसतोमहिमापनिष्टम । मह्नादेवमहाँ३असि ।
१र र २ १र ३ १र र २ १र २
मह्नादेवमहाँ३असि । मह्नादेवमहाँ३असि । बट्-
१र २ १ २र १र २ १र र २ १र २ १र
सूर्य्यश्रवसामहाँ३असि । सत्रादेवमहाँ३असि । सत्रा
र २ १र २ १र र २ १र २ १र २र १र
देवमहाँ३असि । सत्रादेवमहाँ३असि । मह्नादेवा
र २ १ २१र २ १ र २१र २
नामसूर्य्यःपुरोहितः । विभुज्योतिरदाभ्यम् ॥

सूर्यवतीषु स्तुवन्त्यतो वै सूरोऽन्त एतद्दशम मह्ना मन्त एव तदन्तेन स्तुवते प्रतिष्ठायै ॥ ४६ ॥

॥ सद्भुतसाम । ऊ० ५,१,२८ । सा० ब्रा० २,८ ॥

४ ५ १ ० २ ३ ५ ५ २
सादा । सस्पतायिमद्भुता । ओ२३४वा । प्राया
३ ५ १ १ २ ३ ५
ओ२३४वा । आइन्द्रा । स्योकामा२३४याई५ईम् ।
२ १ र १र २र ३ १ १ १ १
सनिम्मे२धामयासिषा२३४५म् ॥

मासꣳ सोमभक्ष्यः स्यात् सदसस्पति मद्भुत मित्येतेन श्रुतनिगादी भवति सदा वैतम् प्रयुञ्जीत श्रुतनिगादी भवति ॥ ४७ ॥

॥ सत्रस्यर्द्धिं । आर० ४,१,४ । ब्रा० ५,४ ॥

२र र र र र र र र २ १ २ १र २
औहोवाऔहोवाऔहो३वा । अगन्मज्योतिः ।
१ २ १र २ १ र २र २ १ र
२ । अगन्मज्योतिः । अमृताअभूम । २ । अमृता
२ र र १ २ १र र २र १ २
अभूमा । तरिक्षंपृथिव्याअध्यारुहामा । २ । तरिक्षं
१र र २र १ २ १ २र १ २ २र
पृथिव्याअध्यारुहाम । दिवमन्तरिक्षादध्यारुहाम ।३।
१ २र र र १ २र१र १ २र
अविदामदेवान् । ३ । समुदेवैरगन्महि । ३ । औ
र र र र र र २ १ र ३ १११
होवाऔहोवाऔहो३वा । सुवर्ज्योती२[redacted]॥

सत्रस्यद्ध्याग्नीध्र मुप्[redacted]
ष्ठन्ति चतुरक्षरणिधनं भव[redacted]-
ष्वेव प्रतितिष्ठन्त्यातमितोनि[redacted] सर्व
मापुवन्ति ॥ ४८ ॥

साममीतिलब्धमर्यादोपनाम-क्षेतवेदत्रयानुवाद-सामगा-
ऽऽवरथश्रीसत्यव्रतशर्मं सङ्कलितनाम-संहिता-ब्राह्मण-
स्थाननिर्देशसहितानि,
कौथुमानां जातकर्मादिषु व्यवहार्याणि,
सब्राह्मणानि आशीस्सामानीति ॥

# ॥ अथ रहस्योत्तमसामानि ॥

॥ महाशान्तिकर्मणि विनियोज्यानि ॥

---

ब्राह्मणम्—पञ्च पविमन्ति महासामानि सर्वस्य प्रथमोत्तमे रुद्रस्य वीण्यथापर मग्नेर्हरसी हे सुरस्य हरसी हे मृत्योहर: पञ्चमꣳ सामानी वा त्रिकार्ये लोकानाꣳ शान्तिरुत्तमम्''—इति ३।१३॥

॥ ओ३म् ॥

१ ०२ ३१ २र३ २ ३ २३१२ ३ १२ ३ २
आक्रन्दयकुरुघोषम्महान्तꣳहरीइन्द्रस्याभियोजयाशू।
३ १२ ३२ ३२ ३ १ २ ३२ ३१ १ २
मर्म्माविधन्ददतामन्योअन्यꣳशल्यात्मापततुश्लोकमच्छ।
२उ ३१ २र ३१२ ३१२
प्रयच्चक्रमरावणोसमन्ताभ्यवर्त्तयत्।
२उ ३१२ ३१२३१२३ १२
ज्योगिन्तिसमोहातैशयातैगवच्छिर:॥(छन्द:)

२ ३ ३२१ १२र ३१२
आ। क्रन्दय। कुरु। घोषम्। महान्तम्।
२३१२ १२र ३२ ३ ३१ २
हरीइति। इन्द्रस्य। अभि। योजय। आशूइति।
३ १२ ३ १२ ३ ३२
मर्म्माविधम्। मर्म्म। विधम्। ददताम्। अन्य:।
३ २ ३ ३ २ ३१२
अन्। य:। अन्यम्। अन्। यम्। शल्यात्मा।

३ २ ३ ३ १ २र १ २र
शल्य। आत्मा। पततु। श्लोकम्। अच्छ। प्र।
२ २ १ २र २ ३ १ २
यत्। चक्रम्। अरावणे। अ। रावणे। सनतै।

३ १ २ ३ १ २र
अभ्यवर्त्तयत्। अभि। अवर्त्तयत्। ज्योक्। द्रूत्।
३ २ ३ १ २र १ २र १ २र
तिस्रः। ओहातै। शयातै। केशवत्। शिरः॥ (पदं)

२र १ २ १ र — १ — १र
आक्रन्दयोवा। कुरुघोषम्महा२आन्ता२म्। हरी
र र — १ — र १ र
इन्द्रस्याभियोजया२। आशू२। मर्माविधन्ददता
— — २ १र र र
मन्यो२। आन्या२म्। शल्यात्मापततुश्लोकमा२३।
१ ३ ५र र १
आ२। च्छा२३४। औहोवा। अस्॥ १

२र १ १ १
हाउ। ३। अस्। ३। फट्। ३। मृस्। ३।
१ १र ऽ १ ऽ १र र १र र
हस्। ३। प्राय२त्। चक्र२म्। आरा२। आव्
ऽ १र ऽ १र ऽ १र ऽ १र रऽ
णा२इ। सान२। ताअ२। भ्याव२। ताय२त्।
१ र ऽ १ ऽ १र र ऽ १र र ऽ १र र ऽ
जीयो२क्। इत्ती२। स्राओ२। हातै२। शाया२।
१र र ऽ १र ऽ १र ऽ २र १
तैके२। शाव२त्। शाइर२ः। हाउ। ३। अस्३।
१ १ १ ३ ५र
फट्। ३। मृस्। ३। हस्। २। हा२३४। औ

२ २र १ २र १ २र १ २र १
होवा। ए अस्। ए फट्। ए सृस्। ए हस्।
३ १ १ १ १
डू२३४५ ॥ २

२ १ २ १र ऽ १ ऽ १र र ऽ
अभ्याभुः। ३। प्रायश्तू। चक्र२म्। आरा२।
१र र ऽ १र ऽ १र ऽ १र ऽ
आवृणा२ड्र। ३। सान२। ताअ२। भ्याव२।
१र ऽ १र र ऽ२ १र ऽ १र र ऽ
ताय२त्। ३। जौयो२क्। डूत्तौ२। स्वाओ२।
१र र ऽ १र र ऽ १र र ऽ १र ऽ १र ऽ
ह्याते२। ३। शाया२। तैके२। शाव२त्। शाडू२२ः।
२ १ १ २ १ २ ५र
३। अभ्याभुः। २। अ। भ्या२। भू२३४। औ
र २ र २ १ ३ १ १ १ १ १
होवा। हस् हस् ए३ चचू२३४५ः ॥ ३

२र २ र र र २ १ २
हाउ। ३। जुरोहरोहरोहरः। ३। वृश्वप्रवृश्च
१ २ २ऽ १ १ १ २ १ र २र
प्रक्किन्धी। ३। हाउ। ३। वा। प्रयच्चक्रमरावृणो।
२ १ २र १ २ १र १ र २र र १ र २र
सनताअभ्यवर्त्तयत्। ज्योगिक्तिस्रओहातै। गयातै
१र २ १ २र १र र र
केशवक्किरः। हाउ। ३। जुरोहरोहरोहरः। ३।
२ १ २ १ २ २ ऽ ऽ ऽ २र
वृश्वप्रवृश्चप्रक्किन्धी। ३। हाउहाउहाउवा। ए।

१ २१ २ २र १ २ १ ३
वृश्चप्रवृश्चप्रक्छिन्धी । ३ । ए । वृश्चप्रवृश्चप्रक्छिन्धौ
१११ १
२३४५ ॥ ४

२र १ र २ १ २ १ २ १ २ १र २ १र २ १
हाउ । ३ । वयोबृहद्दतꣳहविर्भद्राꣳस्वधाꣳस्वयꣳ
२ १ २ १र २ १ १
स्कृणवद्वृषमूर्जꣳरजःसुवः । हुम् । ३ । हे । ३ । हꣳ
३ ५र र २ १ र २र १ र
। २ । हꣳ२३४ । औहोवा । अभित्वाशूरनोनुमो-
१ २र र १ र र र २ १ २
हम् । अदुग्धाइवधेनवोहम् । ईशानमस्यजगतः स्व
१ र र २
र्दृशꣳहम् । ईशानमिन्द्रतस्थुषो [illegible] । [illegible] ।
१ र २ १ २ १ २ १ २ १र १र
वयोबृहद्दतꣳहविर्भद्राꣳस्वधाꣳस्वयꣳ [illegible]
१ १
जस्सुवः । हुम् । ३ । हो । [illegible]ꣳ२३४ ।
५र र २र १र २
औहोवा । ए । वाक् । ए । इडा । ए । सुवः । ए ।
१ २र १र २र १ २ र र १ २ १
बृहत् । ए । भाः । ए । अर्कमर्च्चतदेवावृधꣳहम् ॥ ५ ॥

श्रीसामगाचार्यावसथश्रीसत्यव्रतसामश्रमिभट्टाचार्येण सामादिरहस्यतच्छन्दःपदपाठसहितानि यथावदुद्धृतानि पञ्च पविमन्ति महासामानि रहस्योत्तमसामानि वेति ॥

# ॥ अथाग्निष्टोमसामानि ॥

( गानग्रन्थेष्वनधीतान्येवेह सङ्गृह्यन्ते ; नान्यानि )

---

॥ ओ३म् ॥

॥ अथ सुब्रह्मण्यसाम ॥

आदित्य ऋषिः, सामसम्याच्छन्दः, इन्द्रो देवता। "ब्रह्म च वा इद मग्रे सुब्रह्म चास्ताम्"-इति विधायकं ब्राह्मणम् (ष० १,१) ॥

२ १
सुब्रह्मण्यो३म् ( त्रिः ) ॥

१ र २ १ २ १र २ १र र २ र र १ २
इन्द्रागच्छ हरिव आगच्छ मेधातिथेर्मेष वृषणश्वस्य

र र १र र २ १ २र र र १र २ र
मेने। गौरावस्कन्दिन्नहल्यायै जार कौशिकब्राह्मण

१र २ र २ र १र र २ १र २र
गौतमब्रुवाण। अह्रे सुत्या मागच्छ मघवन् देवा

१ २र १र २ १र २ १र २
ब्रह्माण आगच्छतागच्छतागच्छत ॥ १ ॥ १.

वस्तुतः 'सुब्रह्मण्या'-नामनिगदोऽयं यजुर्विशेष एव, सामः कल्पेषु लाट्यायनके ( १,३ ) प्रपञ्च्य विहितः, परं विधायक-ब्राह्मणे षड्विंशे ( १,२ ) सामेति च निर्दिष्टः ; सामगेगीय-मानत्वात्। तत्रैवाचरणो व्याख्यातश्च ( १,१ )। शतपथब्राह्म-णेऽपि ( ३,३४,२८ ) प्रपञ्च्य सामान्यतो व्याख्यातः। तैत्तिरीया-रण्यके (१,१२, ३ ; ४) ऽधीयते तु सुब्रह्मण्येत्यन्तः। श्रौताश्वलायन-

सूत्रेऽपि ( १२, १४ ) स्मृतः। मीमांसायाः सूत्रभाष्यन्यायमाला-ग्रन्थेष्वेतत्प्रकृतार्थोऽपि निरूपितः। "इदानीं चाहे सुत्या मिति वचन मुत्तरेष्वहस्सु द्वाहेष्वोऽयेति"—इति चात्र कल्पव्याख्या।

———

॥ अथ वासवरौद्रादित्यवैश्वदेवसामानि चत्वारि ॥

पुष्कल ऋषिः, द्विपदा गायत्रीच्छन्दः;

प्रातस्सवने वसवो देवताः, माध्यन्दिनसवने रुद्रो देवता, तृतीयसवने आदित्याः विश्वेदेवाश्च देवताः। 'पुरा'-इत्यादीनि त्रीणि विधायकानि ब्राह्मणानि ( छा० ४, २४, ३; ७; ११ ) ॥

लोकद्वारमपावार्णू३। पश्येमत्वावयꣳरा१२१२।
हुम्। आ२। ज्यायो। आ३४५॥ १॥ २.

लोक०—०वैरा१२१२। हुम्। इत्यादि॥ २॥ ३.

लोक०—०स्वारा१२१२। हुम्। इत्यादि॥ ३॥ ४.

लोक०—०साम्रा१२१२। हुम्। इत्यादि॥ ४॥ ५.

———

॥ अथ विश्वरूपसामानि सप्त ॥

पुष्कल ऋषिः, पङ्क्तिश्छन्दः, विश्वरूपदेवता।

( उ० आ० ८, २, ७, २; ३ )

युञ्जे वाचꣳ शतपदीं गाये सहस्रवर्त्तनि।

३ १र २र३ १२ १२ ३२ ३ १२
गायत्रं त्रैष्टुभं जगद् विश्वा रूपाणि सम्भृता ।
२ १र २र ३२
देवा ओकांᳲसि चक्रिरे ॥

आर्च्चिकग्रन्थे तु "गायत्रं त्रैष्टुभं जगत्"—इति द्विः श्रूयते, तथाच चरणत्रिकयोर्गायत्रीच्छन्दस्क मृग्द्वयं स्फुटम्; पर-मीह्रातग्रन्थे एकैवेय मृक्, पंक्तिच्छन्दस्का गीयते गायत्रस्वरेण। तथाहि धानञ्जय्यः—"एकस्यां पंक्तौ त्रिर्गायत्रं गायेत्"—इत्यादि। पंक्तिश्च पञ्चपदा भवति; "पंक्तिः पञ्चिनी पञ्चपदा"—इति दैवत-ब्राह्मणादिग्रासनात् ( दै०ब्रा० ३,१३। निरु० ७,३,८ )।

१र र १ १ र
युञ्जेवाचᳲशतपदोम् । प्र । ॐगायेसहस्रवर्त्तनि
र र र रर र — २र१र र र
गायत्रंत्रैष्टुभञ्जगद्विश्वारूपाणिसम्भार्त्ता२ । देवाओकाᳲ
२ १ — १
सिचा१२१२ । उ । हुम् । आ२ । ति । क्रायिरो ।
२ १११
प । आ३४५ । नि ॥ १ ॥ ६.

धानञ्जय्यमते इद मेवैकं विश्वरूपसाम त्रिर्गेयम् ॥

१र र १र
युञ्जेवाचᳲशतपदोम् । प्र । ॐगायेसहस्रवर्त्ता३
— २र१ र २ १ —
नी२ । गायत्रंत्रैष्टुभा१२१२ । उ । हुम् । आ२ । ति ।
१ २ १११
जागो । प । आ३४५ । नि ॥ १ ॥ ७.

१र १ र
गायेसहस्रहस्रवर्त्तनोम् । प्र । ॐगायत्रंत्रैष्टुभं

र — २ २र र र २ १
जागा२त् । विश्वारूपाणिसा१२१२ । उ । हुम् ।
— १ २ १ १ १
आ२ । ति । भार्त्तो । प । आ३४५ । नि ॥ २ ॥ ८.

१र र १ र र र
गायचं त्रैष्टुभंजगोम् । प्र । ॐवायिश्वारूपाणिस
— २र १र र र २ १
म्भार्त्ता२ । देवाओका ः सिचा१२१२ । उ । हुम् ।
— १ २ १ १ १
आ२ । क्रायि२ । प । आ३४५ । नि ॥ ३ ॥ ९.

गौतममते त्रिमानि त्रीणि विश्वरूपसामानि ; "त्रिषु पादेषु गायेत्"—इति तद्वचनात् । तथा चाद्येषु त्रिषु पादेषु गीत माद्यं गायत्रम्, द्वितीयादिषु त्रिषु द्वितीयम्, तृतीयादिषु त्रिषु च तृतीयम् ।

प्रौढब्राह्मणमते तु द्वयोर्ऋचोरेकः प्रगाथः सम्पद्यते, तत्रैवं त्रीणि सामानि भवन्ति—

१ र र
युञ्जे वाचꣳ इत्यादि गौतमीयाद्यानुरूपम् ॥ १ ॥ १०.

१र र १ र र —
गायचं त्रैष्टुभंजगोम् । प्र । ॐगायचं त्रैष्टुभंजागा२त् ।
२ १र र र २ र १ —
विश्वारूपाणिसा१२१२ । उ । हुम् । आ२ । ति ।
१ २ १ १ १
भार्त्तो । प । आ३४५ । नि ॥ २ ॥ ११.

१ र र र १ र र र
विश्वारूपाणिसम्भृतोम् । प्र । ॐवायिश्वारूपाणि

— २र१र र र २ १
सम्भ्रात्तौ२। देवाओकाꣳसिचा१२१२। उ। हुम्।
— १ २१११
आ२। ति। क्रायिरो। प। आ३४५। नि॥ ३॥ १२

———

॥ अथ ज्योतिःसामानि त्रीणि ॥

पुष्कल ऋषिः, गायत्रीच्छन्दः, अग्नीन्द्रसूर्या देवताः।

(उ० आ० ८, ३, ८, १)

३ २उ ३ १ २३ २उ ३ २ ३ २ ३ १ २
अग्निर्ज्योतिर्ज्योतिरग्निरिन्द्रोज्योतिर्ज्योतिरिन्द्रः।
२३ २ ३ २ ३ १ २
सूर्योज्योतिर्ज्योतिःसूर्यः॥

अत्रैकैकस्मिन् पादे एकैकं गायत्रं साम गातव्यं भवति। तद्यथा—

१ र र र र
अग्निर्ज्योतिर्ज्योतिरग्नोम्। ॐआग्निर्ज्योति
र — २ १ र र २ १
र्ज्योतिराग्नौ२ः। अग्निर्ज्योतिर्ज्योता१२१२यिः। हुम्।
— १ २१११ १र र
आ२। आग्नो। आ३४५॥ १॥ इन्द्रोज्योति
र १ र र र
र्ज्योतिरिन्द्रोम्। ॐआयिन्द्रोज्योतिर्ज्योतिरायिन्द्रा
— २१र र र २ १ —
२ः। इन्द्रोज्योतिर्ज्योता१२१२यिः। हुम्। आ२।
१ २१११ १र र र र
आयिन्द्रो। आ३४५॥ २॥ सूर्योज्योतिर्ज्योतिः

१ २ २ २ २ — २२ १२
सूर्यौम्। ॐसूर्योज्योतिर्ज्योतिःसूरायाः२ः। सूर्यो
२ २ २ १ — १
ज्योतिर्ज्योता१२१२यिः। हुम्। आ२। सूर्यो।
२ १११
आ३४५ ॥ ३ ॥ १३,१४,१५.

---

॥ अथ बहिष्पवमानस्तोत्रसामानि नव ॥

तत्र,

षट् धूर्गानानि, श्वर्ती गायत्राणि त्रीणि; "गीतिविकारो गायत्रस्य धुरः स्तोत्रियानुरूपयोर्ज्योतिष्टोमस्य"-इति ला० सू० ७,१२।

बहिष्पवमानस्तोत्रस्यर्चां पुष्कल ऋषिः, गायत्रीच्छन्दः, सोमो देवता। ओङ्कारस्य परमेष्ठी ऋषिः, दैवी गायत्रीच्छन्दः, परमात्मा देवता। हिङ्कारस्य वसिष्ठ ऋषिः, दैवी गायत्रीच्छन्दः, प्रजापतिर्देवता। "प्रजापतिरकामयत"-इति (ष० ब्रा० २, १—३) धूर्विधायकम्। "इमे वै लोका गायत्रं त्रिवृद् गेयम्"-इति ब्राह्मणम् (७,१)। "स तु वै यज्ञेन यजेत"-इति बहिष्पवमानस्य ब्राह्मणम् (६,८)। "मनो हिङ्कारः"—इति रहस्यम् (४,११)।

(उ० आ० १प्र० १अ० १—३सू० १—९ऋक्षु)

१ २ २ २ २ १ — — १२ २
उपास्मैगायताधरोम्। प्र। ओम्पा२वा२माना
२ — १ २ २ २ १ —
येन्दावा२ अभिदेवाइया१२१२। उ। (हुम्। आ२।
१ २ १११
ति।) यातो। प। सा३४५त्। नि। १। १६.

रेतस्यायामहिङ्कारः; "अहिङ्कृता प्रथमा रेतस्या"-इति यज्ञतन्त्रे।

१ २ २ १ — २ २
अभितेमधुनापयोम्। प्र। ओमा२थर्वाणाअशि
— १ २ २ १ १ —
श्रादे२ युर्वन्देवायदा१२१२। उ। हुम्। आ२।
१ २ १ १ १
ति। वायो। प। सा३४५म्। नि। २। १७.

"द्वे अक्षरे समयनी व्यतिषजति"–इति ष० २,१। ला० ७,१२।

१ १ — — —
सनःपवस्वशङ्गवोम्। प्र। ओंशा२ञ्जा२ना२य
१ २ १ २ — १ २
शमर्वा३ता३यि श२राइजा१नो२ षा३धा१२१२। उ।
१ — १ २ १ १ १
हुम्। आ२। ति। भायो। प। स्वा३४५ः।
नि। ३। १८.

"तां बलवद्विवोरसेव गायति"—इति ष० २,१। ला० ७,१२।

१ २ १ २ — १
दविद्युततियारुचोम्। प्र। ओम्पारिष्टोभा२न्ता
२ — १२ —१ २ १
याकृपा२ सोमाःशुक्रा२गावा१२१२। उ। हुम्।
— १ २ १ १ १
आ२। ति। शायिरो। प। इडा३४५। नि। ४। १९.

"चत्वारिचत्वार्यक्षराणि निक्रीडन्निव गायति"–इति ष०,ला० ७,१२।

१ २ २ २ १ २ २
हिन्वानोहेटभिर्हितोम्। प्र। ओमा३वाजंवाज्य

क्रमीऽत् सीदन्तोवा१२१२नुषा१२१२। उ। हुम्। आ२। ति। याथो। प। वा३४५क्। नि। ५। २०.

'निरुक्तां चानिरुक्तां च गायतीति"-इति ष० २,१। ला० ७,१२।

ऋधक्सोम:सुवस्तयोम्। प्र। ओंसञ्जा३१ग्मानो दा३यिवा३का३वा३य पवस्वसूरिया१२१२। उ। हुम्। आ२। ति। दृशो। प। आ३४५। नि। ६। २१.

एतस्या द्वितीयपादगानेऽस्ति मतान्तरता। सामसूत्रं ७,१२ द्र०।

"अतःपरासु धूर्गानाभावात् 'तत्सवि'-गायत्रान्न विशेषः"-इति कल्पव्याख्यायां रथन्तरपृष्ठे ज्योतिष्टोमे वरदराजः।

पवमानस्यतेकवोम्। प्र। ओंवाजिंत्सर्गाअसृक्षता२। अर्वन्तोनश्रवा१२१२। उ। हुम्। आ२। ति। स्यावो। प। आ३४५। नि। ७। २२.

अच्छाकोशम्मधुश्चुतोम्। प्र। ओमासृग्रंवारेअव्या या२यि। अवावशन्तधा१२१२। उ। हुम्। आ२। ति। तायो। प। आ३४५। नि। ८। २३.

१ २                      १       २ २ २ २
अच्छासमुद्रमिन्दवोम् । प्र । अोमास्तङ्गावोनधे
—          १     २            १       —
नावा२: । अगमन्नृतस्ययो१२१२ । उ । हुम् । आ२ ।
१               २ १ १ १
ति । नायिमो । प । आ३४५ । नि । ९ । २४.

वहिष्पवमाननामस्तोत्रं सूक्तत्रयमूलकं भवति । तत्रैकैकस्मिन् सूक्ते तिस्रस्तिस्रः ऋचः श्रूयन्ते तस्तेषां त्रिकमिति च समाख्या । तत्तृचत्रयगताश्च नव ऋचः स्तोत्रस्याश्रिभूता इति ताः स्तोत्रीया इत्याख्यायन्ते । तासा माद्या 'रेतस्या'—इति च परिभाष्यते । तासु नवस्वेवर्क्षु वहिष्पवमानस्तोत्रसम्पादनाय नव गायत्राणि गातव्यानि भवन्ति । तथाच नवैव गायत्रसामानि सम्पद्यन्ते । तत्र चाद्यानि षडेव धूर्गानानीत्यप्युच्यन्ते; तेषां विशेषतो धूस्व-विधानात् । अपिच तत्र प्रथमतृचगतानां गायत्रत्रयाणां समुदितानां साधारणं नाम स्तोत्रीयसामेति, तथा द्वितीयतृचगतानां गायत्रत्रयाणां समुदितानामनुरूपसामेति, तृतीयतृचगतानां गायत्रत्रयाणां समुदितानां पर्याससामेति च । तदेवं नवगायत्रा-त्मकम्, स्तोत्रीयानुरूपपर्यासेतिनामभेदात् सामत्रयोपेतं यदेकं स्तोत्रं भवति वहिष्पवमानम्, तद् रथन्तरपृष्ठे ज्योतिष्टोमे "उपास्मै"-इत्यादिषु नवसु स्तोत्रीयासृक्षु समुत्पद्यते ; बृहत्पृष्ठे तु "पवस्व वाचो अग्रियः"-इत्यादिष्विति विशेषः । इह तु प्राथम्याद्दिक्प्रदर्शनाय रथन्तरपृष्ठगतान्येव सामानि प्रदर्श्यन्ते; नान्यानि । अथैतासामेव वहिष्पवमानस्तोत्राश्रिरूपाणां स्तोत्रीयाणां नवानामृचां तिसृभिः विष्टुतिभिस्त्रिवृदाख्यः

स्तोमश्च सम्पद्यते। तत्र प्रथमा विष्टुतिः 'उद्यती', द्वितीया 'परिवर्त्तिनी', अन्या तु 'कुलायिनी' नामेति दिक्॥

---

अथाज्यस्तोत्राणि चत्वारि। तेषु गायत्रसामानि द्वादश। तानि च धूर्गानान्येव; "आज्येषु च"-इतिकल्पसूत्रात् (७, १२)। सर्वेषा मेवाज्यस्तोत्राणां "प्रजापतिर्देवेभ्य आत्मानम्"-इति विधायकं ब्राह्मणम् (७,२)।-"यस्य वा एता वहिष्पवमाने विगीयान्तराज्येषु सङ्गायन्ति"-इति रहस्यब्राह्मणम् (४,११)। अत्र पञ्चदशस्तोमः। "पञ्चभ्यो हिंकरोति स तिसृभिः"-इति तत्स्तोमविधायकं ब्राह्मणम् (२, ४; ५; ६)। स्तोमस्यैतस्य 'पञ्चपञ्चिनी', 'उद्यती', 'अभिक्रामन्ती'—इति तिस्रो विष्टुतयः।

तत्र,

॥ प्रथमाज्यस्तोत्रस्याङ्गसामानि त्रीणि॥

प्रथमाज्यस्तोत्रर्चां पुष्कल ऋषिः, गायत्रीच्छन्दः, अग्निर्देवता। दिवं श्रोत्रे च ध्यायन् गायेत्।

(उ० आ० १प्र० १अ० ४सू० १—३ ऋचः)

१ र र र १ र र र
अग्नआयाहिवीतयोम्। प्र। ओङ्गाणानोहव्यदाता
— २ १र र २ १ —
या२यि। निहोतासत्सिवा१२१२। उ। हुम्। आ२।
१ २ १ १ १ १ र
ति। हायिषो। प। आ३४५। नि॥१॥ तन्त्वासमि
१ र र — २ १ र र
द्भिरङ्गिरोम्। ओङ्घात्तेनवर्द्धयामासी२। बृहच्छोचा
२ १ — १
यवा१२१२। उ। हुम्। आ२। ति। ष्ठायो। प।

आ३४५ । नि ॥ २ ॥ सनःपृथःश्रवायियोम् । प्र । ओमाच्छादेवविवासासी२ । बृहदग्नेसुवा१२१२ । उ । हुम् । आ२ । ति । रायो । प । आ३४५ । नि ॥ ३ । २५,२६,२७.

॥ द्वितीयाज्यस्तोत्रस्याङ्गसामानि त्रीणि ॥

द्वितीयाज्यस्तोत्रर्चां पुष्कल ऋषिः, गायत्रीच्छन्दः, मित्रावरुणौ देवते। पृथिवीं प्राणापानौ चाध्यायन् गायेत् ।

( उ० आ० १प्र० १अ० ५सू० १—३ ऋचः )

आनोमित्रावरुणोम् । प्र । ओघ्राक्तैर्गव्यूतिमुक्षता२म् । मध्वारजाꣳसिसू१२१२ । उ । हुम् । आ२ । ति । क्रातो । प । आ३४५ । नि ॥ १ ॥ उरुशꣳसानमोवृधोम् । प्र । ओमाह्नादक्षस्यराजाथा२ः । द्राघिष्ठाभिःशुचा१२१२ । उ । हुम् । आ२ । ति । व्रातो । प । आ३४५ । नि ॥ २ ॥ गृणानाजमदग्निनोम् । प्र । ओंयोनावृतस्यसीदाता२म् । पातꣳसोममृता१२१२ । उ । हुम् । आ२ । ति । वाधो । प । आ३४५ । नि ॥ ३ ॥ २८,२९,३०.

॥ तृतीयाज्यस्तोत्रस्याङ्गसामानि त्रीणि ॥

तृतीयाज्यस्तोत्रर्चां पुष्कल ऋषिः, गायत्रीच्छन्दः, इन्द्रो देवता। अन्तरिक्षं चक्षुषी च ध्यायन् गायेत।

( उ० आ० १प्र० १अ० ६सू० १—३ ऋक्षु )

आयाहिसुषुमाहितोम्। प्र। ओमायिन्द्रसोम म्पिबाआयिमा२म्। एदम्बर्हिःसादा१२१२। उ। हुम्। आ२। ति। मामे। प। आ३४५। नि॥ १॥ आत्वाब्रह्मयुजाहरोम्। प्र। ओंवा हृतामिन्द्रकेशायिना२ः। उपब्रह्माणिना१२१२। उ। हुम्। आ२। ति। शाणी। प। आ३४५। नि॥ २॥ ब्रह्माणस्त्वायुजावयोम्। प्र। ओंसोमपा मिन्द्रसोमायिना२ः। सुतावन्तोहवा१२१२। उ। हुम्। आ२। ति। माहो। प। आ३४५। नि। ३॥ ३१,३२,३३.

॥ चतुर्थाज्यस्तोत्रस्यांगसामानि त्रीणि ॥

चतुर्थाज्यस्तोत्रर्चां पुष्कल ऋषिः, गायत्रीच्छन्दः, इन्द्राग्नीदेवते। सर्वं वाचं च ध्यायन् गायेत्।

( उ० आ० १प्र० १अ० ७सू० १—३ ऋक्षु )

इन्द्राग्नीआगतꣳसुतोम्। ओङ्गायिर्भिर्नभो

२ — २ १ २ २ १
वरेणियार२म् । अस्यपातश्चिया१२१२ । उ । हुम् ।
— १ २ १ १ १
आ२ । ति । पायितो । प । आ३४५ । नि ॥ १ ॥
१ २ २ १ २ २
इन्द्राग्नीजरितुःसचोम् । प्र । ओंयाज्ञोजिगाति
२ — २ १२ २ २ १ —
चेतना२ । अयापातमिमा१२१२ । उ । हुम् । आ२ ।
१ २ १ १ १ १
ति । सुतो । प । आ३४५ । नि ॥ २ ॥ इन्द्रमग्नि.
१ २ २ —
कविच्छदोम् । प्र । ओंगाज्ञस्यजूतियावार्णा२यि ।
२२ १२ २ २ १ —
तासोमस्येहता१२१२ । उ । हुम् । आ२ । ति ।
१ २ १ १ १
पातो । प । आ३४५ । नि ॥ ३ ॥ ३४,३५,३६.

आजगस्तोत्रीयाणा माद्यासु चतसृषु ऋक्षु अन्यास्वप्यान्यपि चत्वारि स्तोत्रीयांगगायत्रसामानि गीयन्ते ; जगत्यादिविकारतः ।

अथात्रापरम् ।—प्रथमाज्यस्तोत्रस्य अग्नआयाहीति योन्यृक् ; योनिग्रन्थे (१, १, १, १) समाम्नानात् । तत्वासमिदिति, सनःपृथुरिति चैते उत्तराग्रन्थे तस्या एव अग्नआयाहीतीरतस्या ऋच उत्तरे ( १,१,४,२ ; ३ ) ऽधीयेते इति उत्तरे । यदा अग्न-आयाहीत्यस्यां गायत्रं गीतं भवति, तदा तदुत्तरयोरपि गायत्रे गातव्ये भवतः ; 'यद् योन्यां तदुत्तरयोर्गायति'-इतिशासनात् । यद्यप्येव मस्मिन् त्वचे सूक्ते त्रीणि गायत्रसामानि सम्पद्यन्ते, तथापि स्तोत्रीयतयैकत्व मेव ; 'एकं साम त्वचे गी"/स्तोत्रीयम्'-इतिश्रवणात् । एव मेव सर्वत्र स्तोत्रीयसामसु धेयमिति दिक् ॥

१ २ २ २ १ २
वरिवोधातमोभुवोम् । प्र । ॐमा३हिष्ठोवृत्रहन्त
—२ १ २ २ २ १ —
मा२ःपर्षिराधोमा१२१२ । उ । हुम् । आ२ ।
१ २ १ १ १
ति । घोनो । प० । आ३४५ । नि ॥ ३ ॥ ४२.

---

ज्योतिष्टोमस्य सप्त संस्था भवन्ति — १अग्निष्टोमः, २अत्यग्निष्टोमः ३उक्थः, ४षोड़शी, ५वाजपेयः, ६अतिरात्रः, ७आप्तोर्यामश्चेति। तत्राद्योऽग्निष्टोम एव सर्वासा मन्यासां संस्थानां प्रकृतिभूतोऽन्ये विकृतयः। स च द्विविधः रथन्तरपृष्ठो बृहत्पृष्ठश्चेति-पृष्ठस्तोत्रभेदात्। तत्र रथन्तरपृष्ठस्यैव प्राथम्यम्—"प्रथमे ज्योतिष्टोमप्रयोगे रथन्तर मेव पृष्ठम्"—इत्यादिकल्पव्याख्यानादितः। तत्रैव रथन्तरपृष्ठेऽग्निष्टोमे यानि सामानि ब्राह्मणग्रन्थादिप्रासनानुसारत एव गीतानि भवन्ति; न तु क्वचिदपि गानग्रन्थे श्रुतानि, तन्मात्राण्येवेह संगृह्य प्रदर्शितानीति शम् ॥

॥ इत्यग्निष्टोमसामानि ॥

सामश्रमीत्युपनामावसथश्रीसत्यव्रतभट्टाचार्यकृतं
स्वग्रथिताग्निष्टोमसामविवरणं च समाप्तम् ॥

---

# ॥ अथ सप्तदश महासामानि ॥

---

## ॥ ब्रह्मसाम ॥ १ ॥

१
ओ३म् ॥ १ ॥

"ओ मित्येतदक्षर मुद्गीथ मुपासीत। ओ मिति ह्युद्गायति तस्योपव्याख्यानम्। एषां भूतानां पृथिवी रसः पृथिव्या आपो रसः। अपा मोषधयो रस ओषधीनां पुरुषो रसः पुरुषस्य वाग्रसः वाच ऋग्रस ऋचः साम रसः साम्न उद्गीथो रसः॥"—इति छा॰ ब्रा॰ ३।१ ॥ १॥

---

## ॥ सत्यसाम ॥ २ ॥

२उ ३क २र
भूर्भुवस्वः ॥ २ ॥

"सत्यꣳसाम स्वर्गस्य वा लोकस्य द्वारविवरणं देवानां वौकस्त्रयस्य वा वेदस्याप्यायन मयातयामाचरस्यम्"—इति सा॰ ब्रा॰ १।१ ॥२॥

---

## ॥ व्याहृतिसाम ॥ ३ ॥

( नैतत्साम क्वचिदपि गानग्रन्थे श्रुतम् ; गीयते तु बहुत्र )

५ १र र र २
भूः । भूः । होइ । भूः । होइ । भूः । हा ३१
— २र १ र २ ११११ ५ १
उवा २ । ए । सुवर्ज्योती २३४५ः ॥ भुवाः । भुवः ।
२ — २र
होइ । भुवः । होइ । भुवः । हा३१उवा२ । ए ।
१ र ३ ११११ ५ १
सुवर्ज्योती २३४५ः ॥ सुवाः । सुवः । होयि । सुवः ।
२ — २र १ र ३ ११११
होयि । सुवः । हा३१उवा२ । ए । सुवर्ज्योती२३४५ः ॥
५ १ २
महाः । महः । होयि । महः । होयि । महः । हा३१
— २र १ र ३ ११११ ५ १
उवा२ । ए । सुवर्ज्योती २३४५ः ॥ जनाः । जनः ।
२ — २र
होयि । जनः । होयि । जनः । हा३१उवा२ । ए ।
१ र ३ ११११ ५ १
सुवर्ज्योती २३४५ः ॥ तपाः । तपः । होयि । तपः ।
२ — २र १ र ३ ११११
होयि । तपः । हा३१उवा२ । ए । सुवर्ज्योती२३४५ः ॥
५ १
सत्याम् । सत्यम् । होयि । सत्यम् । होयि । सत्यम् ।
२ — २र १ र ३ ११११ ५
हा३१उवा२ । ए । सुवर्ज्योती २३४५ः ॥ पुरुषाः ।
१ २
पुरुषः । होयि । पुरुषः । होयि । पुरुषः । हा३१
— २र १ र ३ ११११
उवा२ । ए । सुवर्ज्योती २३४५ः ॥ ३ ॥

———

॥ गायत्रसाम ॥ ४ ॥

( इद मपि न गानग्रन्थेषु श्रुतम् ; गीयते तु सर्वत्र )

छ० ६प्र० ३अ० १० सू० १ऋचि, एकं साम ।

१२ ३१ २र ३ १ २ ३१ २

तत्सवितुर्वरेण्यम् भर्गोदेवस्य धीमहि ।

२३ १ २ ३१ २

धियो यो नः प्रचोदयात् ॥ ४

१ र र र र

तत्सवितुर्वरेणियोम् । भार्गो देवस्य धीमा ह्रो

— १र र २ १ —

२ । धि यो योनःप्र । चो ऽ१ऽ२ऽ१ । हुम् । आ२ ।

१ २ १११

दायो । आ३४५ ॥ ४ ॥

"प्राणो वै गायत्रं प्राणः स्वरः प्राण मेव तन्मध्यत आत्मन् दधाति स सर्व मायुरेतीडां पशुकामाय निधनं कुर्यात् स्वः स्वर्गकामाय यशो ब्रह्मवर्च्चस-कामायायुरामयाविने हुंसीत्यभिचरत एते वै गायत्रस्य दोहा ब्रह्मवर्च्चसी पशुमान् भवति य एवं वेद"—

इति ब्रा० ७ । १ ।

"तेजो वै गायत्री च्छन्दसां तेजो रथन्तरं साम्नां तेजश्चतु-र्विंश स्तोमानां तेज एव तत्सम्यक् सन्दधात्यपि ह पुत्रस्य पुत्र-स्तेजस्वी भवति"—इति च ब्राह्मणम् १५ । १० । ४ ।

———

## ५ बृहत्साम ॥ ५ ॥

छ० ३प्र० १अ० ५द० २ऋचि, आ० १प्र० १अ० २७साम ।

१ २र ३ १ २र ३ १ २
त्वा मिद्धि हवामहे सातौ वाजस्य कारवः ।
२ ३१ २ ३ १ २ ३ २३ १उ ३ १ २
त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥ ५

२र र र र २ र १र र
औहोई त्वामिद्धि हवामहा३ए । सातौ वाजा
२ ३ ५ १ २ २र ४र ५ २ १
स्याकारा २३४ वाः । तुवा ३४ । औहोवा । वृत्र
१ २ २ २ ५ १र
इषुवाई । द्रासा३१त् । पतिं ना२३४राः । त्व
२ २ २र ४र ५ — १ ५ ५
काष्ठा३४ । औहोवा । सु२ अर्वा२३४ । ताः । उहु
५ १
वा६हाउ । वा । इस् ॥ ५ ॥

"इसिति बृहत् प्राण मुदजयत्"—इति ब्रा० ७ । ६ ॥
"प्रजापतिरकामयत बहु स्यां प्रजायेयेति स तूष्णीं मनसा ध्यायत् तस्य यन्मनस्यासोत्तद् बृहत् समभवत् स आदधीत गर्भो वै मेऽय मन्तर्हितस्तं वाचा प्रजनयाइति"—इति च ब्रा० ७ । ६ ॥ ५ ॥

॥ रथन्तरम् ॥ ६ ॥

छ० ३प्र० १अ० ५द० १ऋचि, पा० २प्र० १अ० २१साम ।

३ १ २ १ २ ३ १२
अभि त्वा शूर नोनुमो ऽदुग्धा इव धेनवः ।
१ २ ३ २ ३र ३ २३ १ २ ३ १२
ईशान मस्य जगतः स्वर्दृश मीशान मिन्द्र तस्थुषः ॥ ६

२ऽ र र र १ ऽ १ २र र
आभित्वा शूरनोनुमो वा । आदुग्धा इव धेनव
र र १ २ १
ईशान मस्य जगतः । सुवा २३ र्दृ शाम् । आइ
र २ १ ४ ३ र र ५
शानमा २३ इद्रा ३ । तास्थु २३४ षा । ओ वा ६ ।
५ १
हाउवा । अस् ॥ ६ ॥

"असिति रथन्तर मपान मभिसमवेष्टत"—इति ब्रा० ७ । ६ ।
"स वाचं व्यसृजत सा वाग्रथन्तर मन्वपद्यत रथघर्ष्याः
चेक्षातारोदिति तद्रथन्तरस्य रथन्तरत्वम्"—
इति च ब्रा० ७ । ६ ॥ ६ ॥

———

"प्राणापानौ वै बृहद्रथन्तरे ज्योगामयाविन उभे कुर्यादप-क्रान्तौ वा एतस्य प्राणापानौ यस्य ज्योगामयति प्राणापानावेवास्मिन् दधाति"—इति च ब्राह्मणान्तरम् ७ । ६ ॥ ५,६ ॥

———

## ॥ महावामदेव्यसाम ॥ ७ ॥

उ० १प्र० १अ० १२सू० १—३ ऋचः, ऊ० १प्र० १अ० ५साम ।

१ २ ३ १ २र ३ २ ३ १ २ ३ १ २ २ ३
कया नश्चित्र आ भुवदूती सदावृधः सखा । कया
१ २ ३ २ १ २ ३ १ २र ३ १ ३
शचिष्ठया वृता ॥ कस्त्वा सत्यो मदानां मंहिष्ठो
३ १ २ ३ १ २ ३ २ ३ १ २ ३ १उ ३
मत्सदन्धसः । दृढाचिदारुजे वसु ॥ अभी षु नः
१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
सखीना मविता जरितॄणाम् । शतम्भवास्यूतये ॥ ७

३ र ४ २ ४र ५ १ र
काऽ५या । नश्चा३इत्रा३आभुवात् । ऊ । तो
२ १र २ १ २ र २ १
सदावृ धः स । खा । औ३हो हाइ । कया २३
२ ३ र २ १ — १
शचाइ । ष्ठयौ हो ३ । हुम्मा २ । वाऽ२त्तौ ३ऽ५
२ ३ र ४ २ ४ ५ १
हाइ ॥ काऽ५स्त्वा । सत्यो ३ मा३ दानम् । मा ।
२र १ २ १ २ र २ १
हिष्ठो मा त्सादन्ध । सा । औ ३ हो हाइ । दृढा २३
२ १र २ १ — १
चिदा । रुजौ हो ३ । हुम्मा २ । वाऽ२ सो३ऽ५
२ ३ र ४ २ ४ ५ १
हायि ॥ आऽ५भी । षुणा३ः सा ३ खीनाम् । आ ।
२र १ २र १ २ र २ १
विता जरायि तॄ । णाम् । औ३हो हायि । शता
२ ३ र २ १ — १
२३म्भवा । सियौहो३ । हुम्मा २ । ताऽ२यो ३ऽ५
२
हायि ॥ ७ ॥

"एते वै पूर्णात् पूर्णमभ्युत्तिष्ठन्ति ये वामदेव्येन स्तुवन्त्य-न्तरिक्षं वामदेव्य मन्तरिक्षेणेद१ सर्वं पूर्णम्" —
इति ब्रा० १५ । १२ ॥ ७ ॥

———

" इयं वै रथन्तर मन्तरिक्षं वामदेव्यं द्यौर्बृहदिमे लोका-स्त्रिरात्रो यदेतानि सामानि सम्प्रत्यञ्चि करोतीमानेव तल्लोकान् सन्दधाति तेन त्रिरात्र माप्नोति"—इति ब्रा० १६।११ ॥ ५—७ ॥

———

## ॥ यज्ञायज्ञीयसाम ॥ ८ ॥

छ० १प्र० १अ० ४द० १ऋचि, गे० १प्र० २अ० २५साम ।

३ १ २ ३ १२ ३ १ २ २ १२
यज्ञायज्ञा वो अग्नये गिरा गिरा च दक्षसे ।
१ २ ३२३ १२ ३ १ २ ३२ ३ १ २र
प्रप्र वयममृतं जातवेदसं प्रियम्मित्रन्न शᳩसिषम् ॥८

४ ३ ४ २ ४ ५ १ र
यज्ञाऽ५ य । ज्ञा ३ वो ३ ग्नायाइ । गाइरा
२ १ २ २ १ ऽर १
गिरा । चा ३ दाक्षा ३ साइ । प्र प्रा २ वयमममृतम् ।
र २ १ २ २ १
जाता २३ वा । हुम्माइ । दा ३ साम् । प्रायम्मित्र
१ ३ २ ३११११
न्नशा२ᳩसिषाउ । वा२३४५ ॥ ८ ॥

"ब्रह्मणो वा एष रसो यद् यज्ञायज्ञीयं यद् यज्ञायज्ञीयेन स्तुवन्ति ब्रह्मण एव रसे यज्ञं प्रतिष्ठापयन्ति"—इति ब्रा० ८ । ६ ॥ ८ ॥

———

"एतद्वै प्रत्यक्षं महाव्रतं तस्य गायत्रं शिरो बृहद्रथन्तरे पक्षौ वामदेव्य मात्मा यज्ञायज्ञियं पुच्छं दक्षिणा एवार्क्य मेष वाव प्रत्यक्षं महाव्रतेन स्तुते य एतेन यजते"–इति ब्रा० १६।११ ॥ ४–७ ॥

---

## ॥ इन्द्राणीसाम ॥ ८ ॥

छ० ३प्र० १भ० १द० १०ऋचि, गे० १५प्र० २भ० ११साम ।

१ २ ३ १ २र ३ १ २र
न कि इन्द्र त्वदुत्तरं न ज्यायो अस्ति वृत्रहन् ।
२ ३ २र १ २
न क्येवं यथा त्वम् ॥ ८ ॥

४ ५ १ २ १र र
न । क्येना को । आयिन्द्रत्वदुत्तराम् । न ज्यायोऽ
१ २ १ २ ३ ५
२ । अस्ता२३इ त्र । हुं ऽ३ हुम् । त्रा २३४ हान् ।
१ २र १ २ १ २ २
नक्ये । वं या २३था । हुं ऽ३ हु३४३म । तू ३४५वो ६
५
हाइ ॥ ८ ॥

"आस्यदघ्न उदके तिष्ठन् नक्येनाको इत्येतत् त्रिःसप्तकृत्वो गायेदेतत्सर्ववाप्योगतसम्मित मेतेन वा सर्वान् कामा-मवाप्नोति य एवं वेद य एवं वेद ॥"
—इति सा० ब्रा० १ । ४ ॥ ८ ॥

---

## ॥ भर्गयशसी सामनी ॥ १०,११ ॥

छ० ३प्र० २अ० २द० ६ऋचि, आर० २प्र० २अ० ११साम भर्गम्।

२ १ २र ३ १ २ ३ १ २
बृहदिन्द्राय गायत मरुतो वृत्रहन्तमम्।
२ ३ २ ३ १ २ ३ १२ ३ २ ३ २ २ १ २
येन ज्योतिरजनयन्नृतावृधो देवं देवाय जागृवि ॥१०

२र र र र र १र २ र र
हाउधामयत्। हाहाउधामधामायत्। हाहाउ
र १ २ र १ ३ ५
बृहद्धामधामायत्। बृहदिन्द्रा। यगा२या२३४ता।
२ र १ ३ ५ २र र
मरुतोवृ। त्रहा२न्ता२३४माम्। येनज्योतिरजनयन्।
१ ३ ५ २र र र १ ३ ५ १र
ऋता२वा२३४र्द्धाः। देवन्देवा। यजा२गृ२३४वी। हाउ
र २र र १र २ र र र १र
धामयत्। हाहाउधामधामायत्। हाहाउबृहद्धामधा।
३ ५र र २ १ १ १ १ १
मा२या२३४। औहोवा। ए३। भर्गा२३४५ः॥ १० ॥

आ० १प्र० ३द० १०ऋचि, आर० ४प्र० २अ० १२साम यशः।

( यशःसाम्न ऋक् खलु अविकृतैव श्रूयते )

२ऽ १ र २र १र र २ १र २ऽ
हाउ। ३। वा। यशोमाद्यावापृथिवी। हाउ।
१ र २र १र २ऽ ७ १ र
३। वा। यशोमेन्द्रबृहस्पती। हाउ। ३। वा। यशो
ऽ १ र २ऽ १ २ र
भगस्यविन्दतु। हाउ। ३। वा। यशोमाप्रतिमुच्यताम्।
ऽ २ १ र २ ७ २ऽ
हाउ। ३। वा। यशस्वियस्याः सꣳसदः। हाउ। ३। वा।

२ १ २ १र र २ऽ १ २
अहं प्रवदितास्याम् । हाउ । ३ । वा । अश्वमिष्टये ३
५
हस् ॥ ११ ॥

"भर्ग एव भर्गेण तुष्टुवानो भवति यशो यशसा"—इति, "भर्गयशसी भवतो भर्गेणैवास्मै भर्गो दधाति यशसा यशः"— इति च ब्रा० १५ । ३ ; १९ । ८ ॥ १०,११ ॥

---

## ॥ परमेष्ठिप्राजापत्यव्रतम् ॥ १२ ॥

आ० १प्र० ३द० १ऋचि, आर० ४प्र० १ख० ७साम ।

२ ३ २ ३ २ ३ १ र २र ३ २ ३ १र २र
मयि वर्चो अथो यशोऽथो यज्ञस्य यत् पयः ।
१ २ ३ १ २ ३ १र २
परमेष्ठी प्रजापतिर्दिवि द्या मिव दृꣳहतु ॥ १२
२९ १ — १ १ —
हाउ । ३ । आनो २ ब्रुवाइ । २ । आनो २
१ ५ ३ ५र र १ २र र ३ १ १ १ १
ब्रुवा२ या२३४ । औहोवा । रक्षतनोरक्षितारा२३४५: ।
२र १ — २र र १ २र र
हाउ । ३ । आनो २ ब्रु० पूर्वपाठः । गोपायतगोपा
र ३ १ १ १ १ २र १ — १ २ १ २
यितारा२३४५: । हाउ । ३ । आनो २ ० । मयिवर्चः
१ ३ — १ २र १ १ २ —
अथोया १ शा २: । अथोयज्ञ । स्ययात्या १ या २: ।
२ र १र १ ६ ४ — २ १ र १ २
परमेष्ठी । प्रजा या १ तो २: । दिविद्यामि । वहꣳहा१
२र १ — १ २र र
तू २३ हाउ । ३ । आनो २ ० । रक्षतनोरक्षिता

३ १११११ २र १ — २रर १ २र
रा २३४५: । हाउ । ३ । आनो २ ० । गोपायतगो
र र ३ ११११ २र १ — २र
पायितारा २३४५: । हाउ । ३ । आनो २ ० । ए ।
१ २र र र र र १ २रर र २र
रक्षतनोरक्षितारोगोपायतगोपायितार: । २ । ए ।
१ २र र र र र १ २र र र ११११
रक्षतनोरक्षितारोगोपायतगोपायितारा २३४५: ॥१२॥

"रोहिण्यां वा रोहिण्या गो: सरूपवत्साया पयसि रक्तशालीनाᳫं स्थालीपाकᳫं श्रपयित्वा परमेष्ठिन: प्राजापत्यस्यव्रतेनाभिजुहुयात्सहस्रकृत्व: शतावर मेतेनैवाभिगीयोद्धृत्य सभार्य: प्राश्नीयात् सुरूपान् दीर्घायुष: पुत्रान् लभते" सा॰ ब्रा॰ २।८ ॥१२॥

---

॥ अर्कपुष्पसाम ॥ १३ ॥

छ॰ ६प्र॰ २अ॰ २द॰ ११ऋचि, गे॰ १६प्र॰ २अ॰ ३४साम ।

२ १२ ३ १२ ३१ २र ३ १२
पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि
३ १२ १२ ३२उ ३ १ २ ३२ ३
विश्वत: । अतप्ततनूर्न तदामो अश्नुते शृतास
१ २र ३ १ २र
इद्वहन्त: सं तदाशत ॥ १३ ॥

२ १ २र १ २१ २ १ २
पवित्रन्तेविततंब्रह्मणस्पते३ । हुवे२३ । २ । हो
२ २ २ १र २र १
वा३ हा३ । हाइ । प्रभुर्गात्राणिपर्येषिविश्वता२३: ।
र १२ २ २ १२र१
हुवे२३ । २ । होवा३ हा३ । हाइ । अतप्ततनून

५र १र ३ ३ १२ २ २
तहा२ मोअम्नु ते ३। हुवे २३। २। होवा३हा३हाइ

१र २ १ २ १ ५र १ १ २
मृतासइद्वहन्त:सन्तदा२शत। हुवे२३। २। होवा३

२ २ ५र र २ १र र'र र १र
हा३। हा३४। औहोवा। अर्क्कोदेवाना५२म्परमेवि

र ३ ।।।।
यो५२मा२३४५न्॥ १३॥

"अर्कपुष्पं भवत्यन्नं वै देवा अर्क इति वदन्ति रस मस्य पुष्प मिति स रस मेवाबाद्य मवरुन्धे ऽर्कपुष्पेण तुष्टुवानः" — इति ब्रा० १५। ३॥ १३॥

---

## ॥ सेतुषाम ॥ १४ ॥

आ० १प्र० १द० ८ऋचि, आर० २प्र० १अ० ३४साम।

३ १ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
अहमस्मि प्रथमजा ऋतस्य पूर्वं देवेभ्यो अमृतस्य नाम।

३ १२ ३ २उ ३ १ २ ३ २उ १ २ १ २ ३ १ २
यो मा ददाति स इदेव मावदह मन्न मन्न मदन्त मद्मि॥

२र १र र २ २ १ १र
हाउ। २। सेतूᳬस्तर। ३। दुस्त। रान्। १। दा

२र १र र २ २र र १
नेनादानम्। ३। हाउ। ३। अहमस्मि प्रथमजाऋता

२ १ १ १ १ २र १र र २ १
२३स्या२३४५। हाउ। ३। सेतूᳬस्तर। ३। दुस्त।

र ६ २र १र २ १ र २र १र
रान्। ३। अक्रोधेन क्रोधम्। २। अक्रोधेनक्रोधम्।

२र र र र र १ २ १ १ १ १
हाउ। ३। पूर्वं देवेभ्यो अमृतस्य ना २३मा२३४५

२र १र२ २ २१ २१र
हाउ । ३ । सेतूꣳस्तर । ३ । दुस्त । रान् । ३ । अह्वया
२र १र २र र र र१ २
अद्याम् ।३। हाउ । ३ । योमाददाति स इदेवमा२३वा
१११ २र १र र र २ १
२३४५त् । हाउ । ३ । सेतूꣳस्तर । ३ । दुस्त । रान् ।
२१र र १ २र १ २
सत्येनानृतम् । हाउ । ३ । अहमन्नमन्नमदन्तमा२३ औ
१११ २ऽ ऽ ऽ २र१र ५ २र१२
३४५ । हाउ हाउ हाउवा । एषा गतिः । ३ । एतद-
१२ १र २ १र र २र
मृतम् । ३। स्वर्गच्छ । ३ । ज्योतिर्गच्छ । ३ । सेतूꣳस्ती
१र २१ ११११
र्त्वाचतुरा ३२४५ः ॥ १४ ॥

"भ्राजाभ्राजि शुक्रचन्द्रे राजनरौहिणके शुक्रियाद्ये हाउस्त्वर-
तादीनि चत्वारि सेतुषाम चैषः पवित्रवर्गं एतेषा मेक
मनेकं वा सर्वाणि वा प्रयुञ्जानः पूतो भवति"
—इति सा० ब्रा० २ । १ ॥ १४ ॥

---

## ॥ तवश्यावीयं साम ॥ १५ ॥

॥ एतच्च साम गेयादिचतुर्गानग्रन्थेभ्यः पृथगेवाधीयते ॥

॥ मूलच्छन्दस्य गायत्री, व्याहृतयः, स्तोभाश्च ॥

१ ११११ १र १ २१ २
ॐहꣳ२३४५ । ॐभूः । ॐभूमिर्दिवमन्तरिक्षम् ।
१ र र र र २ १ र र
ॐभुवः । ॐऋचोयजूꣳषिसामानि । ॐभार्गोदेवस्य
र ११११ १ र र र र र
धीमाह्नी २३४५ । ॐस्वः । ॐप्राणोपानोव्यानः

र  २र १  १ २१र र  २ ११११  १
समानउदानः। ॐधियोयोनःप्रचो २३४५। ॐ

महः। ॐजनः। ॐतपः। ॐसत्यम्। ॐपुरुषाः।

र र २१  १ ११११
ॐपरोरजोऽमृतोम्। ॐहं२३४५। हुम्।

— १ २ ११११ १ र  र
आ२। दायो। आ २३४५। ॐभूमिरन्तरिक्षन्द्यौः।

र  १  र
ॐतत्सवितुर्वरेण्ययोम्। ॐऊऽ२र्क। हाउ३। हो३

२  १२१र र २र१  १  २
वाक्। ॐबह्वोऽयजोऽमृतोम्। ॐऊऽ२र्क। हाउ३।

२  १ररर र र र २र१
हो३वाक्। ॐप्राणोपानोव्यानोसमानउदानः। धि-

र र  २ ११११  १  र  २
योयोनःप्रचो२३४५। ॐऊऽ२र्क। हाउ३। हो३वाक्।

१ऽर १  १२ १२  २१र२
३। धर्मो२धर्मः। धर्मविधर्म। ३। सत्यञ्चाय। ३।

२१ २  १ ऽ १ ऽ १
ऋतंवद। ३। हंवंव२ंवंव२ंवम्॥ १५॥

"तवस्यावेयं प्रयुञ्जानः शुचिः पूतो ब्रह्मलोक मभिसम्पद्यते न च पुनरावर्त्तते न च पुनरावर्त्तते" इति सा० ब्रा० २।१॥ १५॥

---

## ॥ भारुण्डसाम॥ १६॥

॥ एतदपि साम गेयादिचतुर्गानग्रन्थेभ्यः पृथगेवाधीयते॥

॥ मूलञ्चास्य उ[illegible]थमितमन्त्रः, छ १।२।२।४, स्तोभाश्च॥

३ २उ  ३ १ २  ३ १२  ३ १२  ३ १ २
इमं स्तोमं मर्हते जातवेदसे रथमिव सम्महेमा

३ १२ ३२उ ३ १ २ ३ १ २र ३ १
मनीषया। भद्रा हि नः प्रमतिरस्य सꣳसद्यग्ने सख्ये
२र ३ १ २र
मा रिषाम वयं तव ॥ १६ ॥

५ २ १ — १र
उद्वयाम्। तमसस्पारी२। ज्योतिःपश्यन्तउत्त-
— १ — र १र ३
रा२म्। स्वःपश्यन्तउत्तरा२म्। देवन्देवत्रा२सू२३४
५ १ २ १र २ ३ २ र र र
रीम्। अगन्मज्योतिरुत्तमा१म्। स्वसारआतोतुन-
र र २ ३र ४र ५ — १र र र
आतोतू३४। औहोवा। ऊ२वातः। ३। वातो
२र १र र २ १र २ २ १ २
वातः। २। वातोन्तम्णानिपुरा३याः। यमोहाउ। ३।
१ २ १र २र र ३ २ ३
पितरोहाउ। ३। भारण्डोहाउ। ३। इमाꣳस्तो
५ २ ३ ५ १२र१२ १
२३४माम्। अर्हते२३४जा। तावेदसे३। होइ।
२र ३र ४ ५ — १र १र
होइये३। ३। होइये। ३। उ२वातः। ३। वातो
र २र १र र २ १र २ २ १ २
वातः। २। वातोन्तम्णानिपुरा३याः। यमोहाउ।
१ २ २र २र र ३ २
३। पितरोहाउ। ३। भारण्डोहाउ। ३। रथा२
३ ५ २ ३ ५ १२र १२ १
मौ३४वा। सम्महे२३४मा। मानी। षया३। होइ।
२र ३र ४ ५ — १र १र र
होइये३। ३। होयिये। ३। उ२वातः। ३। वातो
२र १र र २ २र २ २ १ २
वातः। २। वातोन्तम्णानिपुरा३याः। यमोहाउ। ३।
१ १ १र २र र ३ २ ३ ५
पितरोहाउ। ३। भारण्डोहाउ। ३। भद्राही२३४नाः।

प्रमातौ२३४रा । स्यासऽसदे३ । होइ । होयिये३ । ३ । होइये । ३ । ऊ२वातः । ३ । वातोवातः । २ । वातोन्नृम्णानिपुरा३याः । यमोहाउ । ३ । पितरोहाउ । ३। भारण्डोहाउ ।२। अग्नाइसा२३४ख्याइ । माराइषा २३४मा । वायन्तवा३ । होइ । होइये३ । ३ । होइये । ३ । ऊ२वातः । ३ । वातोवातः । २ । वातोन्नृम्णानिपुरा३याः । यमोहाउ । ३ । पितरोहाउ । ३ । भारण्डोहाउ । ३ । भारण्डा२४औहोवा । ए । वातोन्नृम्णानिपुरयद्‌यमःपितरोभारण्डः । २ । वातोन्नृम्णानिपुरयद्‌यमःपितरोभर्मे । ३ । सत्यज्ञाय । ३ ।

॥ महा० वं२ वं२ ॥ १ । १५ ॥

एतत्तु अमृतसंहितायां प० … द्रष्टव्यम् … मभिसम्पद्यते "सप्तदश आत्मा भवति प्रजापतिर्वै सप्तद… २।१ ॥ १५ ॥ मेवाप्नोति" —इति, "सप्तदशो वै प्रजापति… भवति प्रजापति मेवाप्नोति" —इति च ब्रा० २२।५ ॥१—१७ ॥

इति सामश्रमीत्युपनामावसथश्रीसत्यव्रतशर्मणा सङ्कलितान्यृग्ब्राह्मणसहितानि सप्तदश महासामानि ॥

———

# ॥ अथ संहितासप्तकम् ॥

## १ ॥ अमृतसंहिता ॥

"प्रथमस्त्रिवर्गः सावित्र्यां गायत्रं महानाम्नीष्वेषामृता नाम सꣳहितैतया वै देवा अमृतत्व मेति य एवं वेद"—इति सा० ब्रा० १ । ४ । २३–२५ ॥ १ ॥

छं०—१प्र० १अ० १द० १ऋचि,
गे०—१प० १प्र० १अ० १–३ त्रीणि सामानि ।

४ २र र १ २ — १
२३४माम् । अह ।  । आयाही ३ वोइतो या २ इ । तोया
२र ३र ४ ५ — १ —
होइये३ । ३ । होइये । ३ या २ इ । तो या २ इ ।
र २र १ १र २ ३ ५र र
वात: । २ । ०२३ । त्वाइ इ । वा २३४ औहोवा ।
१
३ । पितरे ॥ १ ॥
३ ५ २
०५ मरू र ४ १ र र र
अग्न आयाहि वी । तयार गृणानो हव्यदाता
२ १र र र २ १ ५ १ ३
२३ याइ । निहोतासत्सिबर्हो २१ इषि । बर्हो २ यिषा
५र र २ २ १ १ १ १
२३४औहोवा । बर्हो ३ षी २३४५ ॥ २ ॥

४ ५ ४र ५र ४ ५ १ र र २
अग्न आयाहि । वा ५ यितयाइ । गृणानोहव्यदा
२ २ १ ३ ५ १ २
१ ता ३ ये । निहोता २३४ सा । त्सा २३४ यि बा३ ।
१ ५ ५
हा २३४ यिषो ६ हाइ ॥ ३ ॥

उ० — ६प्र० ३अ० १०सू० १ऋचि, एकं साम ।

१ र र र र —
तत्सवितुर्वरेणियोम् । भार्गो देवस्य धीमाही २ ।
२ १र र २ १ —
धियोयोनः प्र । चो ऽ१२१ऽ२ । हुम् । आ२ ।
१ २ १११
दायो । आ३४५ ॥ ४ ॥

महानाम्न्यार्चिके सोपसर्गत्वचत्रिके एकं साम ।

१ — २ १र २ १ २र १
ए२ । विदामघवन्विदाः । गातुमनुशंसिषः ।
१ २ २ २ १ — १ र
दाइशा ३१ उवा २३ । ई३४डा । ए २ । शिक्षा
२ र र १ २र र १र — १ २
शचीनाम्पताइ । पूर्वीणाम्पुरू२ । वसा ३१ उवा २३ ।
२ ५ २र १ — १ २
ई३४डा । आभिष्टभभा २ ह्र । ष्टिभिरा ३१ उवा
२ ५ १र ऽ २
२३ । ई३४डा । स्वर्णांशूरः । हा ३१ उवा २३ ।

ई ३४ डा । प्रा । चेतन प्रचेतया । इन्द्रा । द्युम्ना-
यना २ इषाई । इडा । इन्द्रा । द्युम्नायना २ इषाइ ।
अथा । इन्द्रा । द्युम्नायना २ इषाई । इडा । एवा
हि शक्रो राये वाजाय वा १ ज्रो३वाः । शविष्ठ
वज्रिन्ना३ । जा साइ । मꣳहिष्ठ वज्रिन्ना२३ हो ।
जासा ३१ उवा २३ । इट् इडा २३४५ । आया ।
हि पिब मा २ त्स्वा । इडा २३४५ । (१) । ए २ ।
विदारायेसुवीरियाम् । भुवो वाजानाम्पतिर्वशाꣳ२ ।
अनुआ ३१ उवा २३ । ई३४डा । ए २ । मꣳहिष्ठ
वज्रिन्नृञ्जसाइ । यः शविष्ठः शूरा २ । णा ३१ उवा
२३ । ई ३४डा । यो मꣳहिष्ठो मघो ऽ२ । ना ३१
उवा २३ । ई ३४ डा । अꣳग्निर्न्न शोचा २इः । हा
३१ उवा २३ । ई ३४ डा । ऋई । कित्वो अभिनो

१ २ २ २ — १ १ १ २र
नया । इन्द्रो । विदेतमू २ स्तु हाइ । इडा । इन्द्रो ।
१र — १ १ १ २ १र —
विदेत मूरस्तुहाइ । अथा । इन्द्रो । विदेत मू २ स्तु
१ १ २र र र २ २
हाइ । इडा । ईशेहिशक्रस्त मूतयेहवा १ मा३
२ २र १र २ ४ ५ १
हाइ । जेतारमपरा ३ । जाइताम् । सनः स्वर्षदता
र २ १
२३ होइ । हाइषा ३१ उवा २३ । इट् इडा
१ १ १ १ १ २र १ — १
२३४५ । क्रातुः । छन्दऋता २ न्बृहात् । इडा
१ १ १ १ १ — १ २ र १
२३४५ । ( २ ) । ए२ । ईन्द्रन्धनस्य सा तयाइ ।
१ र र र र — १ २
हवामहे जेतारमपरा २ । जितमा ३१ उवा २३ ।
२ ५ १ — १ २ १ ऽ
ई ३४ डा । ए २ । सनः स्वर्षदतिद्विषाः । सानः
— १ २ २ ५
स्वर्षदता २ इ । द्विष आ३१ उवा २३ । ई३४ डा ।
१ र — १ २ २ ५
पूर्वस्ययत्तआ२ । द्विव आ३१ उवा २३ । ई३४डा ।
२ १ र ऽ २ ५
अ(ँ)शुर्मदाया ३ । हा३१ उवा २३ । इ३४ डा ।
१ २ र र १ २ १ —
सू म्न आधेहिनोवसाउ । पूर्त्तीः । शविष्ठ शा२स्य

१ १ २ २ १ १ २
ताई । इडा । पूर्त्तीः । शवि० । अथा । पूर्त्ताः ।
२ १ १ १ र र र २ २
शवि० । इडा । वशीहि शक्रो नूनन्तन्नव्यꣳ सा१न्या
२ २ १र २ ४ ५ १ र
३ साइ । प्रभोजनस्य वा ३ । वाहान् । समर्येषु
१ २ १
ब्रवा २३ होइ । वाहा ३१ उवा २३ । इट् इडा
ऽऽऽऽ १र रर १र — २ १ १
२३४५ । शुरो । योगोषुगा २ च्छताइ । इडा ।
२ १र — १ ११११ १ १ २
साखा । सुशेवो२ दुयूः । इडा २३४५ ।(२)। आइवा ।
र १ ऽऽऽऽ १ १ २र
हियेवा २३४५ । होइ । हो । वाहा२१ उवा २३ ।
२र ५ १ र १ ऽऽऽऽ १
ई२४ डा । आइवा । हियग्ना २३४५ । होइ । हो ।
२र २ ५ १ २ १
वाहा २१ उवा२३ । ई ३४ डा । आइवा । हिइन्द्रा
११११ १ १ २ र१ ऽऽऽऽ
२३४५ । होइ० । आइवा । हिपूषा २३४५ न् ।
१ १ २र र ११११ १
होइ० । आइवा । हिदेवा २३४५ः । होइ । हो ।
२र २
वाहा २१ उवा २३ । ई ३४ डा ॥ ५ ॥

## २ ॥ माधुच्छन्दसी संहिता ॥

"इदꣳह्यन्वोजसेति प्रथमोत्तमे त्वामिद्धा ह्योनरः स पूर्व्यो महोनां पुराम्भिन्दुर्युवा कवि रुपप्रक्ते मधुमति क्षियन्तः पवस्व सोम मधुमाꣳ ऋतावा सुरूपकृ राहसं माधुच्छन्दस मेषा माधुच्छन्दसी नाम सꣳहितैतया वै देवाः स्वर्गंल्लोक मायन् स्वर्गंल्लोक मेति य एवं वेद" – इति सा० ब्रा० १ । ४ । २६–२८ ॥ २ ॥

छ०—२प्र० २प्र० ३द० १ऋचि,

गे०—२प० ५प्र० १अ० १०,१२ द्वे सामनि ।

५ ५ २ १ २ — १ २
इदाꣳइ मे । हियाꣳनू ओ १ जासा २ । सुतꣳ

१ २ १ २ — १र ०
राधा । नाम्या१ता२इ । पिबातुवस्या गिर्वाणा२३४ः ।

३ २ ३ २ १ ३ ५र र २
पिबा ३४ तुवा ३ । स्या२गा२३४ औहोवा । वा२

५
३४णाः ॥ १ ॥

५ १ ५र २ १ २ १ २र
इदꣳह्यनूꣳइ ओजसा । सुतꣳ राधा । नाम्यातौ ।

र २ १ २ १ २र र
हो वा३ हाइ । पिबातुव । स्यगाइर्वाणौ । होवा३

२ १ २र र २ १ २
हाइ । पिबातुवौ । हो वा३ हा । स्यगाये ३ः ।

१ ३ ५र र २ १ २ १ १ १ १
वा२ना२३४ औहोवा । घृतश्चुता २३४५ः ॥ २ ॥

छ० ४प्र० १अ० १द० १०ऋचि, गे० २प० ८प्र० १अ० २३साम।

३र ४ ५र २‸ ३ ४र ५ ५ २ १ २
त्वामिदा। होइ। हियो नरा ६ ए। अपाइप्य
१ २‸ ३ ५ १ २ १र २र
न्वा। ज्वा इन्भूर्णा २३४ याः। स इन्द्रस्तोम वाहसः।
१ २‸ ३र २ ३र २ १ २‸
इहाश्रुधा। औहो ३४ वा हाइ। उपास्वासा।
३र २ ३र २ १र २ १
औ हो ३४वाहा। रमागा२३ हा ३४३ इ। ओ
२३४५ इ। डा ॥ ३ ॥

छ० ४प्र० २अ० २द० ४ऋचि, गे० २प० ८प्र० २अ० १७साम।

५र र र ५ २र १ र
सपूर्व्योमहोना६ मे। वेनः क्रतू३ भाइ रान
र २ २ ऽ २ २ १ —
जे३। हा ३ हा। औ३हो३वा। आयिही २। यस्य
र ऽर १ २ २ २ ऽ २ २
द्वा रा३मानुः पिता ३। हा३हा। औ३हो३वा।
१ — १ र २ २ २ ऽ
आयिही २। दायि वेषुधा३। हा३हाइ। औ३
२ २ १ — १ २ ‸ ३
हो३वा। आयिही२। य आ२३। ना २ जा २३४
५र र २ १ ३ १ १ १ १
औहोवा। मधुश्रुता २३४५ः ॥ ४ ॥

छ० ४प्र० २अ० २द० ८ऋचि, गे० २प० ८प्र० २अ० २१ साम ।

५र ३ २३४र ५ १ र र २ १र
पुराञ्भिन्दुर्युवाकविः । अमितौजा अजाया २३
२ १ र २ १ २३ ५
ता । आइन्द्रो विश्वा ३ । स्याकर्मा २३४ णाः ।
१ २‸ ३ ५ ४ ४
धर्त्ता । वाज्रीवा ओ २३४ वा । पुरुपूष्टुताः । हो ५
इ । डा ॥ ५ ॥

छ० ५ प्र० २अ० १द० ८ऋचि, गे० २प० १२प्र० १अ० ७साम ।

४ ४ ५ र ५ ४ ५ ४ १
ओवा । उपप्रक्षेमधुमतिक्षियन्तः । ओवा । ओयि ।
१र र र२ १ २ १ १
पुष्येमरयिन्धामहेत आ २३ यिन्द्रा । ओ । वा ।
२ २र २ ५
ओवा । ओ । वाहा ३१ उवा २३ । ऊ३४ पा ॥ ६ ॥

छ० ६प्र० १अ० ४द० १०ऋचि, गे० ३प० १५प्र० २अ० १५साम ।

२‸ ३ ५ ३ २ २ १ २
हाओ २३४ हा इ । इहा ३१ । पवस्वसो । मा ३
१ २ ३ ४ ५ २ १र २ १
मधु । माऊ ऋ ता वा । अपोवसा । नो ३ अधि ।
२ ३र ४ ५ २ १ र २ १ २ ३ ४ ५
सानो अव्याइ । अवद्रोणा । नी ३ घृत । वन्तिरोहा ।
३ ५ २ २ १ २ १
ओ २३४ हाइ । इहा २१ । मदिन्तमो । म त्सरः ।
२ ४
। द्रा० ३ पा ५ ना ६५६ः ॥ ७ ॥

छ० २प्र० २भ० २द० ६ऋचि, आ० २प० ३प्र० २भ० ४ साम।

२ र   १ २र १ २र   १ २र १   १   —   १ २
सुरूपकृत्नुमूतये। सुदुघामा। वगो२। दुहया३

२   ५   ३   ५   २ १र   २
१उवा२३। इ२३४डा। सू२३४वा:। जुहूमा२३सी

१   २   ३   २
द्यविद्यविया३१उवा२३। ज्यो२३४ती:॥ ८॥

---

३ ॥ रुद्रसंहिता ॥

"आवोराजा तद्दोवर्गं भ्रात्र्यदोहानि देवव्रतानि चैषा रौद्री नाम सꣳहितैतां प्रयुञ्जन् रुद्रं प्रीणाति"—इति सा० ब्रा० १।४।२८,३०॥

छ० १प्र० २भ० २द० ७ऋचि, ग्रा० १प० २प्र० २भ० ३ साम।

४र ५र र ४   ३ २३ २ ३ ४५   १   २र १
आवोराजा। नमध्वरस्यरुद्राम्। हो। ता। राम्।

२   ३   २ ३ ४ ५   २ १
स। त्ययजा३म्। रोदसीयो:। अग्निम्पु। रा।

२ ३   २ ३ ४ ५   १ २   १   २ १
तनयि। त्नोरचित्तात्। हिरण्य। रू। पा३मव।

२   २ ४
सा३४३। यि। का३र्णुर्पूध्वा३४५३म्॥ १॥

छ० २प्र० १अ० ३द० १ऋचि, गे० २प० ३प्र० २अ० १-४चत्वारि।

५ र ४ ५   १   २ २   २   ५   १
तद्वौहोवा । मायार॒ । सुताइसा२३४चा । पुरु-
२र र   १ २   —   १   १   २ २
हूता । यसात्वा१ना२इ । शंयत् । हा । औ३होइ ।
२   ५   २ २   ४र र   २   १
गा२३४वाइ । ना२शा२३४औहोवा । ए३ । किने
१११
२३४५ ॥ २ ॥

५र र   २   १   र २
तद्वोगाया । सुताइसचा३ । पूरु२३हूता२३४ ।
२र २र   १ २ २   ५   २ १   २   —
हाहो३ । यासत्वा२३४नाइ । शंयज्ञा२३वे । नयौर ।
—   १   ५   ४   ५
हौ२ । हुवो२३४ । वा । का५इनो६हायि ॥ ३ ॥

५ र र   र   ५   २ र १र   २र   १
तद्वोगायसुतेसचा६ए । पूरुहूतायसत्वने । पुरु-
२र र   १ ७   २   ५   २   २
हूता । यासत्वा२३ना२३४इ३ शंयत् । गौवाओ२३४
५   १   ४   २   ५
वा । ना२३या३ । का२४५इनो६हाइ ॥ ४ ॥

५र र   र   ५   २ र १र
तद्वोगायसुतेसचा६ए । पुरुहूतायसत्वनायि ।
१   २   —   १   २   २१   १
शंयज्ञा२३वे । ऐ२होश्आ२३इही । नया२३ । का२
२   ५र र   २१११
इना२३४औहोवा । ई२३४५ ॥ ५ ॥

छ० १प्र० २अ० २द० ५ऋचि, आर० १प० १प्र० २अ० १६-१८मीणि।

२र २र ३ ४र५ २र१र
हाउ। ३। आज्यदोहम्। ३। मूर्द्धानन्दाइ।
२ १ २ २ ४ ५ २र१र २१२
वा३अर। तिम्पृथिव्याः। वैश्वानराम्। ऋतआ।
२र३र४ ५ २ १ २ १ २ ३ ४र
जातमग्नीम्। कविंसम्रा। जा३मति। थिञ्जना-
५ २र१ २ १ २ ३ ४र५ २र
नाम्। आसन्नःपा। त्रा३अन। यन्तदेवाः। हाउ३।
२र ३ ४र५ २र ३ ४ २र
आज्यदोहम्। २। आज्यदो५हाउ। वा। ए।
२र १ ३ २र र १ ३ १ १ १ १
आज्यदोहम्। २। ए आज्यदोहा२३४५म्॥ ६ ॥

२र र १ २ १ २
हाउ। ३। हूम्। चिदोहम्। चिदोहम्। २।
र१र २ १ २ ३ ४ ५ २र१र
मूर्द्धानन्दाइ। वा३अर। तिम्पृथिव्याः। वैश्वानराम्।
२ १ र २र३४५ २ १ २ १
ऋतआ। जातमग्नीम्। कविंसम्रा। जा३मति।
२ ३ ४र५ २र१ २ १ २ ३ ४र१
थिञ्जनानाम्। आसन्नःपा। त्रा३अन। यन्तदेवाः।
२र ३ १ २ १ २ ऽ
हाउ। ३। हूम्। चिदोहम्। चिदोहम्। चिदो३
२ ३ १ १ १ १
हाउ। वा३। ई२३४५॥ ७ ॥

२र १ २ र १र २
हाउ । ३ । च्योहम् । ३ । मूर्द्धानन्दाइ । वा३
१ २ ३ ४५ २र १र २ १ र २र ३र
ग्नर । तिम्पृथिव्याः । वैश्वानराम् । ऋतग्मा । जात-
४५ २ १ २ १ २ ३ ४र ५
मग्नीम् । कविꣳसम्म्रा । जा३मति । थिन्ननानाम् ।
२र १ २ १ २ ३ ४र १ २र १ २
आसन्नःपा । चा३चन । यन्तदेवाः । हाउ३ । च्योहम् ।
५ २ २ ४ ४ २ १
२ । च्यो३हाउ । वा३ । ए३ । ऋतम् ॥ ८ ॥

स्तो० २प्र० ५खण्डे, आर० ३प० ५प्र० १अ० ६–दशैवैष सामानि ।

१ २ १ २ १ २ १
अधिप । ताइ । भिवप । ताइ । प्रचप । ताइ ।
२ १ २ — —१ २ १ र १ १र
स्वःपताइ । धनपता२इ । ना१माः । मन्युनावृत्रहा-
र र २ १र २ १र २ १ २र १ २र १र २ १र र २र १
सूर्य्येणस्वराड्यज्ञेनमघवादक्षिणास्यप्रियातनूराज्ञावि
२र र २ १ र २ १र २ र १ २ १ र २ १ २
ष्णुन्दाधार । वृषभस्त्वष्टावृत्रेणशचीपतिरन्नेनगयःपृथि-
१र २९र र २र १ १ २ र र १ र र
व्यास्हणिकोग्निनाविश्वंभूतम । भ्यभवोवायुनाविश्वाः
२ १र २ र र १र र २ १र र र २ २ १र
प्रजाअभ्यपश्यत्निषट्कारेणार्द्धभाक्सोमेनसोमपाःसमि
२र र १र र र २र र र २ १ २ १ र र २र र र
न्नापरमेष्ठी । येदेवाद्देवाः । दिविषदः । स्यतिभ्योवोदेवा-

२ १र २र १ २ १र र २ १ २ १ र १र र
देवेभ्योनमः । येदे० । अन्तरिक्षसदः । स्यते० । येदे० ।
२ र १ २ १ र १र र २ १२ १ र
पृथिवीषदः । स्यते० । येदे० । अप्सुषदः । स्यते० ।
१र र २ १ २ १ र १र र २र र १ २
येदे० । दिक्षुसदः । स्यते० । येदे० । आशासदः ।
१ र १ २ १र २ १ २र १ र २ १ २र १ र २
स्यते० । अवज्यामिवधन्वनोवितेमन्युन्नयामसिमृडतान्न
१ २ १ २ १ २ १ र २
इहअस्मभ्यम् । इडा२३भा । यइदंविश्वंभूतम् । यूयो३ ।
१ १ ३ ५
आउ । वा२३ । ना२३४माः ॥ ९ ॥

१ २ १ २ १ २ १
अधिप । ताइ । मित्रप । ताइ । क्षत्रप । ताइ ।
१ २ १ १ २ — — १ १ २ १
स्वःपताइ । धनपता२इ । ना२माः । नमउत्तमेभ्य-
२र र १र २ १ र २र १ २र र १ २ १ र
श्चोत्तन्वानेभ्यश्चनमोनोध्रांश्चेभ्यश्चोपवीतिभ्यश्चनमोस्य-
२ १र २र १ २ १ २ र १ २
द्भ्यश्च । तिरधानेभ्यश्चनमःप्रविध्यद्भ्यश्चप्रव्याधिभ्यश्च
१२ १ २ र १ २ १ २ १र २ २ १ २
नमः स्वरद्भ्यश्चत्सारिभ्यश्चनमः श्रि । तेभ्यश्चायिभ्यश्च
१२ १ २ ३ १ २ १ २ १र २ १र २ १ २ १र २
नमस्तिष्ठद्भ्यश्चोपतिष्ठद्भ्यश्चनमोयतेचवियतेचनमःपथेच-
१ २र १ २ १र २ १ १ र २ १ २र
विपथायच । अवज्यामिवधन्वनोवितेमन्युन्नयामसि

१ र २ १ २ १ र १ २ १
मृडतान्नइहअस्मभ्यम् । इडा२३भा । यदृदंविश्व-
र २ १ १ २ ५
म्भूतम् । युयो३ । आउ । वा२३ । ना२३४मा: ॥१०॥
१ २ १ २ १ २ १
अधिप । ताइ । मित्रप । ताइ । चत्रप । ताइ ।
२ १ २ — —१ १ र र २ १
स्व:पताइ । धनपता२इ । ना२मा: । नमोन्नायन-
र २ र र १र २र र १र २ १ २र १ २ १र
मोन्नपतयएकाच्चायचावपन्नादायचनमोनम: । रुद्राय
२र १ २र १ २ १र २ १ २ र १ २ १ २ र १
तौरसदेनमस्थिरायस्थिरधन्वनेनम:प्रतिपदायचपटरि-
र २ १ २ १ २ र १ र २ १ २र र १र २
णोचनमस्त्रियम्बकायचक । परिमेचनमआग्रायेभ्यश्च
र र १र २ १ २ १र २ १र २ १ २ १ र २
प्रत्याग्रायेभ्यश्चनम:क्रव्येभ्यश्चविरिम्फिभाश्चनम:संवृतेच-
१ २र १ २ १र २ १ २र १ र २ १ २र १
विवृतेच । अवज्यामित्रधन्वनेवितेमन्युन्नयामसिमृड
र २ १ २ १ २ १ २ १
तान्नइहअस्मभ्यम् । इडा२३भा । यदृदंविश्वम्भू-
२ १ १ ३ ५
तम् । युयो३ । आउ । वा२३ । ना२३४मा: ॥११॥

— —

# ४ ॥ विष्णुसंहिता ॥

"इदंविष्णुः प्रत्नस्यवृष्णः प्रकाव्यमुशनेवब्रुवाण-इति वाराह मन्त्यं पुरुषव्रते चैषा वैष्णवी नाम सर्ंहितैतां प्रयुञ्जन् विष्णुं प्रीणाति"-इति सा॰ ब्रा॰ १। ४। ३१,३२ ॥

छ॰ ३प्र॰ १अ॰ ३द॰ ८ऋचि, गे॰ २प॰ ६प्र॰ २अ॰ १४ साम।

५ ५ १ ३ २ ३ ५ १
इदा६मे। विष्णूर:। विचक्रा२३४माइ। त्रेधाइ-
र २ १ २ — १ — १ २
धानि। दधाइपा१दा२म्। समू२ढो१। ढा२३मा३।
१ ३ ५र र २ २
स्या२पा२३४औहोवा। ए३। सुले१ ॥ १ ॥

आ॰ १प्र॰ ३द॰ ८ऋचि, आर॰ ३प॰ ४प्र॰ २अ॰ ७ साम।

२र — १ १ २ १ २ १
हाउ।३। ऊ२।२। ऊऽ२। वा३। हाउवा३। हस्हस्।
२ १ र र २ १ र २ १र
अर्चिःशोचिस्तपोहरः। प्रत्नस्यवृष्णो अरुषस्यनूमा२३
१ र र र र २ १र २ र र
हाः। प्रनोवचोविदथाजातवेदा२३साइ। वैश्वा-
१र २ १र र १र र र २ १
नरायमतिर्न्नव्यसीशू२३चौः। सोमइवपवतेचारुरग्ना-
२ २र — १ २
२३याइइ। हाउ। ३। ऊ२। २। ऊऽ२। वा३।
२ ३ १ १ १ १
हाउवा३। ई२३४५ ॥ २ ॥

छ० ६प्र० १अ० ४द० २ऋचि, गे० ३प० १५प्र० १अ० ३६साम।

५र र १ २१र २१र २३
हाउहाउ। हुप्। प्रकाविया॒म्। उशने। वब्रु-
४ ५ २र१र र २ १ २र ३ ४ ५ २ १
वाणाः। देवोदेवा। नाऽञ्जनि। माविवक्ती। महि-
१ २ २ ३ ४ ५ ५र र १
व्रताः। शुचिबा३। धुःपवाकाः। हाउहाउ। हुप्।
२ १र २ १ २ २ ४
पदावरा। हो३अभि। आ३४३यि। तो३रापू॒
भाई५॒६न्॥ ३॥

आ० ४द० ३-७ ऋचु, आर० ५प्र० १अ० १३—१७ पञ्चसामानि।

२ १ २ १ र र २
०उहुवाहाउ। ३। सहस्रशीर्षाःपुरु२३षाः। सह-
र १ २ १ २ १र २१र २
स्राक्षःसहस्रा२३पात्। ऽभूमिꣳसर्वतोवा२३त्वा।
१ २ १र २ १ २ १ऽ
अत्यतिष्ठद्दशाङ्गु२३लाम्। उहुवाहाउ।२। उहुवा३
२ १ १ १११
हाउ। वा३। इट्इडा२३४५॥ ४॥
२ १र र — १र र र २
उहुवोहोवा२। ३। त्रिपादूर्ध्व उदैत्पुरु२३षाः।
१र र र र २ १ २ १र २ १ २
पादोस्येहाभवत्पू२३नाः। तथाविष्वङ्वियक्रा२३मात्।

र १र २ १र र — १ र
अशनानशनेआ२३भी । उहुवौहोवा२ । २ । उहुवौ ।
१ ३ ५र र ३ ५ २ १ र र —
होर । वा२३४ । औहोवा । ई२३४डा । उहुवौहोवा२
१ र १ ३ ५र र ३
। २ । उहुवौ । होर । वा२३४ । औहोवा । सु२३४
५ २ १ र र — १ र १ ३
वाः । उहुवौहोवा२ । २ । उहुवौ । होर । वा२३४ ।
५र र ३ १ १ १ १
औहोवा । ऊ२३४५ ॥ ५ ॥

१र र — १ र र २
इयौहोवा२ । ३ । पुरुषएवेद‌ꣳसा२३र्वाम् ।
१ र २ १र २ १र र र र २
यद्भूतंयच्चभावा२३याम् । पादोस्यसर्वाभूता२३नी ।
१र र २ १ २ १र र — र
त्रिपादस्यामृतन्दा२३इवौ । इयौहोवा२ । २ । इयौ ।
१ ३ ५र र ३ ५ १ र र —
होर । वा२३४ । औहोवा । ई२३४डा । इयौहोवा२ ।
१र १ ३ ५र र ३ ५
२ । इयौ । होर । वा२३४ । औहोवा । ज्यो२३४तीः ।
१ र र — १ र १ ३ ५र र
इयौहोवा२ । २ । इयौ । होर । वा२३४ । औहोवा ।
३ १ १ १ १
ई२३४५ ॥ ६ ॥

२र १र र २ १ २ २र
हाउ ।३। तावानस्य । महा२३इमा३ । हाउ ।३।

१र र र २१र २ २र १र र
ततोज्यायाᳪंश्चपूरू२३षा३: । हाउ ।३। उतामृतत्वस्ये

२ २र १ र र २१र २
शा२३ना३: । हाउ । ३ । यदन्नेनातिरोहा२३ती३ ।

२ऽ २ १ ११११
हाऽउ । ३ । वा३ । ईट्इडा२३४५ ॥ ७ ॥

२ऽ १ र २१र २र २ऽ
हाऽउ३वा । ततोविराडजायत । हाऽ३उवा ।

१र २र १ २१र २ २ऽ १ २र१र २
विराजोअधिपूरुष: । हाऽउ३वा । सजातोअत्यरि

२ऽ १र र २ १ र २१ १ऽ २
च्यत । हाऽउ३वा । पश्चाद्भूमिमथोपुर: । हाउवा३ ।

३ ११११
इ२३४५ ॥ ८ ॥

छ० २प्र० २ष० ३द० ५ऋषि, पार० ३प० ५प्र० १भ० १८ साम ।

२र १ २ १ २ १ २ १ २
हाउ । ३ । भस्मीनस्मिन् । ३ । नृम्णाइन्नृम्णाम् ।

१ २ २र १ २ —
३ । निधाइमाहे । ३ । कयानश्चित्रा३आभू१वा२त् ।

२रर र १ २ — २र १ २
ऊतीसदावृ३धा:सा१खा२ । कयाशचिष्ठा३यावा१र्त्ता

२र १ २ १ २ १ २
२३ । हाउ । ३ । भस्मीनस्मिन् । ३ । नृम्णायि

१ २ १ २ १ १ 
न्रुणाम् । ३ । निधाइमाहे२ । निधा२३इ । मा२ ।
३ ५र र १ र ३ ११११
हा२३४ । औहोवा । सुवर्ज्योती२३४५: ॥ ९ ॥

———

## ५ ॥ विनायकसंहिता ॥

"अदर्दः सुब्धाणास आतून इति वर्गो मृज्यमानःसुहस्त्येति प्रथम-षष्ठे सैषा वैनायकी नाम सᳫंहितैतां प्रयुञ्जन् विनायकं प्रीणाति"–इति सा० ब्रा० १ । ४ । २२,२४ ।

छ० ४प्र० १अ० ३द० ३ऋचि, गी० २प० ८प्र० १अ० ३,४ द्वे सामनी

४ ५ ४ २ र १ २ १ २ ५
अदर्दृत् । समसृजोविखानित्वमर्णा२३४वान् ।
२ र र १ २ १र ५ २
बद्बधानाᳫंअरम्णाः । महान्ता२३४मौम् । द्रपर्वतं
१ २ १ ५ १२।२र १
वियाद्दः । सृजाद्धा२३४राः । पवयद्दान । वा२३
२ १
हा२३४म् । ओ२३४५ई । डा ॥ १ ॥
४ ५ ४ ५ ४ ५ ४ १र र
अदर्दृत्समसृजाः । विखानि । त्वमर्णवान्बद्ब
र र २ १ २ १र २ १ २
धानाᳫंअरा२३मृणाः । महान्तामिन्द्रमर्वतंविया२३द्दाः ।

१ २र — १र ऽ १२र १ ३
स्त्रजाह्वाराः२: । अवा२यद्वान् । वा२। या२३४

५र र ३ १ १ १ १
औहोवा । हा२३४५म् ॥ २ ॥

छ० ४प्र० १अ० ३द० ४ऋचि, गी० २प० ८प्र० १अ० ५, ६ हे ।

४ ५ ४ ५ ३ २ ३ २ ४ ५ ४ ३ ४
सूष्वाणासः । इन्द्रस्तु । मसित्वा । सनिष्यन्त

५ ३ ५ र ३ २ ३
श्चित्तुविन्त । मघवा२३४जाम् । आनः । भराओ२

५ ४ ५ र ४ ५ ४ ५
३४वा । सुवितंयस्यको । ना । तानात्माना ।

२ र १ २ ४
सह्यिया । मा३४३ । तू३वोपूता६५६ः ॥ ३ ॥

२ २ २ ३ ५ १र ३ २ ३
औ३हो३होइ । सू२३४ष्वा । णासः । इन्द्रस्तु ।

२ ४ ५ २ ३ ५ १ २ १
मसित्वा । औ० । सा२३४नी । ष्यन्तः । चौ३त्तुवि ।

२ ३ ४ ५ २ २ २ ३ ५ १
न्तमघवाजाम् । औ२हो२होइ । आ२३४नाः । भरा ।

२ २ ३ ४ ५ २ ३ ५ १
सुविता२म् । यस्यकोना । औ० । ता२३४ना । त्मना ।

२ १र २ २ ४
सह्यिया । मा२४२ । तू३वोपूता६५६ः ॥ ४ ॥

छ० २प्र० २अ० ३द० ३ऋचि, गी० २प० ५प्र० १अ० १६–१८सा०।

५र र २ १ २ १ २र १
आतूनआ। इन्द्रक्षुमा२३न्ताम्। चाइचंग्राभा२३ꣳ
२ १ —१ २र ३ ५ १ —
हाइ। संगृ२भाया। महाहस्तो२३४हाइ। दक्षा२
१ १ ३ ४र र
यिणाइना। महा२३। हा२स्ता२३४औहोवा।
१ २ १ १ १ १ १
दक्षिणे३ना२३४५ ॥ ५ ॥

५र र ४ ५ १ ३ ५
आतूनइन्द्रक्षुमान्ताम्। चित्रा२ङ्ग्रा२३४भाम्।
२ ३ ५ २ऽ २ १ ३ ५र र
संग्रभा२३४या। मा२हा३। हा२स्ता२३४औहोवा।
१ २र ३ १ १ १ १
दक्षिणेना२३४५ ॥ ६ ॥

५र र५४ ५ ५ २ १ र —
आतूनइ। इन्द्रक्षुमा६न्ताम्। चित्रंग्राभꣳसंग्रभा२
२ १र १ २ २ ३ ५
या। चित्रंग्राभꣳसम्। गृ। भौ३होइ। भा२३४या।
२र १ र र १ २र १ ३र
ऐहोइ। महाहस्तीदक्षा२३होइ। औहो। वाहो२३४
५ ४ ५ ५
वा। णापूयिनो६हाइ ॥ ७ ॥

५र र ५ २ १ र र
आतूनइन्द्रक्षुमाङ्गताम्। चित्रंग्राभꣳसंगृभाया।
२ १ र १ २ ५ ३ ५
चित्रंग्राभꣳसम्। गृ२३। इ३४५ हा। भा२३४या।
२र १ र र १ २र १ ३र
ऐहोइ। महाहस्तीदक्षा२३होइ। औहो। वाहो२३४
५ ४ ५ ५
वा। षा५इनोऽहाई ॥ ८ ॥

छ० ६प्र० १भ० ३द० ७ऋचि, गे० ३प० १५प्र० १भ० ६,११ दे।

५ र २ १ २ ३ ५
मृज्यमानाः। सुहस्तिया३। सामु३द्राइवा।
२ १ २ ४ ५ २ १ ५
चमिन्वसा३इ। रायीश्म्पाइशा। गंबहुला३म्। पुरू२
३ ५ १ २र १ २ २ १ २
स्पृ२३४हाम्। पवमाना। औ३हो। भियो२३४वा।
४ ५
षा५सोऽहाइ ॥ ९ ॥
४ ५ ४ १ —१ — १ —
मृज्यमाना५:सुहस्तिया। समु३द्राइवा२। चमा२
१ — १ २ २
यिन्वासो२। रयिम्पिशङ्गम्बहुलम्पुरुस्पृहा। औ३हो।
१ २ २१ ५ ४ ५
पवमा२३ना३। भियो१२३४वा। षा५सोऽहाइ ॥ १० ॥

## ६ ॥ स्कन्दसंहिता ॥

आमन्द्रैरिन्द्रहरिभिरामोविश्वासुहव्यमसेनानीरिति वर्गाः पवित्रम्त इति ह एषा स्कन्दस्य सᳲहितैतां प्रयुञ्जन् स्कन्दं प्रीणाति''-इति सा॰ ब्रा॰ ४ । १ । २५, २६ ॥

छ॰ ३प्र॰ २अ॰ १द॰ ४ऋचि, गे॰ २प॰ ६प्र॰ २अ॰ २७-२८सा॰ ।

५र र १ र र १ २
आमन्द्रैरा। इहरिभाइर्याहिमयूरा२रोमाभा३इः।
४ ५ ४ ५ २ ३ ५ २र १
मालाकाइचीत्। नियेमू२३४रीत्। नपाशिनाः।
२ १ — १ १ ३ ५र र
अतिधान्वे२। वताᳲ२३। आ२इहा२३४औहोवा।
३ ५
वा३३४याः ॥ १ ॥

४र ५ ४र ५ ४ ॥ २र १ २१र
आमन्द्रैरिन्द्र। हा५रिभायिः। याहिमयूᳲररोम
१र र २ १ र २
भाइः। माल्वाका२३इचीत्। नाइयेमुरित्।
१र २ १ २ १
नपाशा२३इनाः। अताइधा२३न्वे। वताᳲ२३।
१ ३ ५र र २ १ १ १ १ १
आ२इहा२३४औहोवा। वयो३भी२३४५ः ॥ २ ॥

४र ५ ४र ५ ४ ४ २र १ २ १र
आमन्द्रैरिन्द्र । हापूरिभीः । याहिमयूऽररोम

— १ — १र र २ १र
भाउ । वा२ । मात्वा३ । केचिन्नियेमुरिन्नपाशिनाउ ।

— १ — १ र २ ३
वा२ । आती२ । धन्वेवता३१उवा२३ । ई२३४

५
हो ॥ ३ ॥

छ० ३प्र० २अ० ३द० ७ऋचि, गे० २प० ७प्र० २अ० ७-८सामानि ।

४र ए ४ ए २ १ — १ २
आनः । एविश्वा । सुहाव्या२म् । आइन्द्रꣳसम ।

१ २ १ ३ ए २ २ १ २र
त्सुभू१षाता । ऊ२३४पा । हा३हाइ । ब्रह्माणि

१ २र ३ २ १ २ १ २ १ २ २
सवना । निवृत्रहान् । परमा२३ज्याः । आर्चा३हाइ ।

१ २ ४ ए ४
षमा । औ३होवा । होपूइ । डा ॥ ४ ॥

एर र र ४ ए १ र र
आनोविश्वासुहाहाव्याम् । इन्द्रꣳसमत्सुभूषतो ।

२ १ २ १ २ १
पब्रा२३ह्मा । णिसवना । निवृत्रहान् । परमा२

२ १ २ २ १ २ ४ ए ४
३ज्याः । आर्चा३हाइ । षमा । औ३होवा । होपूइ ।

डा ॥ ५ ॥

५र र र ४ ५ २ २ र
आनोविश्ववासुहाव्याम् । इन्द्राम् । समत्सुभू
१ २ — २ र १ २
षत । उपाब्रा१ह्मा२ । णिसवनानिवृत्रहन् । परामा
— १र २ १
१ज्या२: । ऋचीषा२३मा२४३ । ओ२३४५इ ।
डा ॥ ६ ॥

छ० ६प्र० १अ० ५द० १ऋचि, गे० ३प० १५प्र० २अ० १६-१८।

२ ५ २ र ४ ५ २ १र २र १ १र र
होऽवा । उहुवा३ । होवा । प्रसेनानाइ: । शूरो
२ २ ३ ४ ५ २ १२र १ २
आ३ । अग्रेरथानाम् । गव्यन्नेताइ । हर्षता३इ ।
२ ३ ४ ५ ३ १र २ १ २ २ ३ ४
अस्यसेना । भद्रान्सखवान् । इन्द्रहा३ । वांत्सखि
५ २र १र २र १ २ १ २ ३ ४ ५
भ्या: । आसोमोवा । स्वा३रभ । सान्दित्ताइ ।
२ ५ २ २ २ ५ ५
होऽवा । उहुवा३ । होवा६ । हाउवा ॥ ७ ॥

५र ४ २ १ १ १ २ १र ५ ५र ४ २ १ १ १
औहो३वा३४५ । प्रसे०—०भ्या: । औहो३वा३४५ ।
२र १र २र १ २ १ २ २ ४
आसोमोवा । स्वा३रभ । सा३४३ । नी३दा५त्ता६ ५६यि ॥८

५र ४ २ १ १ १ १ र २र १ १र र २
औहो३वा३४५। प्रसेनानाइ:। शूरोआ३।
२ ३ ४ ५ २ २र १ १ २ २ ३ ४ ५
यायिरथानाम्। गव्यन्नेताइ। हर्षता३यि। अस्यसेना।
३ र २ १ १ २ २ ३ ४ ५ ५र ४
भद्रान्क्रखान्। इन्द्रहा३। वांत्सखिभ्याः। औहो३
२ १ १ १ ३र र २र १ २ १ २ २
वा३४५। आसोमोवा। स्वा३रभ। सा३४३। नी३
४ ३ १ १ १ १ १
दा५। ता२३४५इ॥ ९॥

छ० ६प्र० २अ० २द० १२ऋषि, गी० ३प० १६प्र० २अ० ३४, ३५।

२ १ २र १ २ १ २ १
पवित्रन्तेविततम्ब्रह्मणस्पते३। हुवे२३। २।
१ २ २ २ १र २र १ २र १
होवा३हा३। हाइ। प्रभुर्गात्राणिपरियेषिविश्वता२३:।
१ २ र१ र ५ १र २ १ २१र
हुवे०। अतप्ततनूर्न्नतदा२मोअश्नुते३। हुवे०। शृता
२१ ५ १ रऽ १ १ २
सइद्वहन्तःसन्तदा२शत। हुवे२३। २। होवा३
२ २ ५र र २ १र र र र ऽ १र
हा३। हा३(। औहोवा। अर्कोदेवाना२म्परमे
रऽ ३ १ १ १ १
वियो२मा२३४५न्॥ १०॥

२ १ २र १ २ १ २ १ २र १
पविचन्तेविततंब्रह्मणस्पते३ । हुवाइ । औहो
— १ १ १ २ १ १र २
वा२ । प्रभु० । हु० । अतप्त० । हु० । शृतास० ।
१ २र १ ३ ५र र २ १ २
हुवायि । औ । हो२ । वा२३४ । औहोवा । अर्कास्य
२१र २ १र ऽ ३ १ १ १ १
देवा:परमेवियो२मा२३४५न् ॥ ११ ॥

---

## ७ ॥ पितृसंहिता ॥

"यद्वाउविश्पतिः सनाद्ग्नेःचममीमदन्त्याभिविषृठ मर्त्या-समुद्रः कनिक्रन्तीति ह एषा पित्र्या नाम सण्हितेतां प्रयुञ्जन् पितॄन् प्रीणाति"—इति सा० ब्रा० १ । ४ । २७,२८ ॥

छ० २प्र० १अ० २द० ८ऋचि, गे० १प० ३प्र० १अ० २८ साम ।

२ १र ४ ५ १ र २र १ २र १र
यद्वाउ२३विश्पति:शिता: । सुप्रीतोमनुषोविशे ।
१ २ १ २ १२र ३ र २ १ २ ४ ५
वेश्वाइदा२३ग्नो: । प्रतिरचा । सिसेधता । औ३होवा ।
४
हो५इ । डा ॥ १ ॥

অগ্নি দেবতা। ঐ শ্যাবাশ্ব ঋষি এই মন্ত্র অবলম্বন করিয়া একটি মাত্র গান প্রকাশ করিয়াছেন॥ ৬৩ ॥ ১॥

৩ ১    ৩ ১ ২    ৩২ ৩ ৩    ৩ ১২ ৩ ২ ৩
চিত্র ইচ্ছিশোস্তরুণস্য ৱক্ষথো ন যো মাতরাৱন্বেতি
১ ২    ৩ ১    ২ ৩১২ ৩২৩১২    ৩ ১
ধাতৱে। অনূধা যদজীজনদধাচিদাৱৱক্ষৎ সদ্যো
২ ৩ ২ ১ ২
মহি দূত্যঞ্চরন্॥ ৬৪ ॥ ২ ॥

বিবৃতিঃ। শিশোঃ তরুণস্য অগ্নেরিতি যাবৎ। বক্ষথঃ (হবির্বহনং) চিত্র ইৎ (আশ্চর্য্যভূতং) যঃ (অগ্নিঃ) মাতরৌ ধাতবে (স্তনপানায়) ন অন্বেতি। অনূধাঃ (স্তনবহিতঃ) যৎ (যদি) অজীজনৎ এনমগ্নিমিতি শেষঃ। অধাচিৎ (উৎপত্ত্যনন্তরমেব) সদ্যঃ মহি (মহত্বং) দূত্যং চরন্ আববক্ষৎ।

১    ২    ৪
গেয়গানম্। ওই। চিত্রইচ্ছাইশো১স্তরুণা২৩। স্যা৩
২ ৩ ৫    ১    ২    ৪ ২    ৩ ৫
ৱক্ষথঃ। ওই। নয়োমাতারা১ৱনুৱা২৩ই। তী৩ধাতৱে।
১    ৭    ৪ ২    ৩ ৫    ১
ওই। অনূধায়াদজীজনা২৩ৎ। আ৩ধাচিদা। ওই। ৱৱক্ষৎ-
২    ২    ৪    ২ ১    ৩
সদ্যো১মহিদূ২৩। তিয়া৩ঞ্চা৫রা৬৫৬ন্। দূত্যঞ্চরন্মহে
১ ১ ১ ১
২৩৪৫ ॥ ২ ॥

৫    ৬    ২    ৫    ৪ ৫    ৪ ৫    ৪ ৫
চিত্রা৬এ। এ৩১২৩৪। শিশোস্তরুণস্যৱক্ষথঃ। ক্ষথঃ।
৫    ৫    ২    ৫ ৪ ৫    ৪    ৫ ৪ ৫
হিহিহিয়া৬হাউ। এ৩১২৩৪। নয়োমাতরাৱন্বেতিধাতৱে।
৪ ৫    ৫    ৫    ২    ৫    ৪    ৫    ৪
তৱে। হিহিহিয়া৬হাউ। এ৩১২৩৪। অনূধায়দজীজনাদধা-
৫ ৪    ৪    ৫    ৫    ২    ৫    ৪
চিদা। চিদা। হিহিহিয়া৬হাউ। এ৩১২৩৪। ৱৱক্ষৎসদ্যো-
৫    ৪    ৫ ৪ ৫    ৪ ৫    ৫    ২
মহিদূতিয়ঞ্চরন্। চরন্। হিহিহিয়া৬হাউ। ৱা। এ৩।
২ ১
ঋতূন্॥ ৩ ॥ ২ ॥

# ॥ अथ गृह्यासंग्रहः ॥

( गोभिलीयगृह्यपरिशिष्टविशेषः )

॥ भगवता गोभिलाचार्य्यपुत्रेण प्रणीतः ॥

॥ श्रीसत्यव्रतशर्म्मणा प्रकाशितः ॥

CALCUTTA.

Printed by Mohendra Nath Sircar.

16—1, GHOSHE'S LANE, SATYA PRESS.

1891.

## ॥ संक्षिप्तविज्ञापनम् ॥

—०—

अथ वाक्यार्थज्ञानं सुगमयितुम्, छन्दोदोषं निवारयितुम्, ग्रन्थान्तरविरोध मपगमयितुं वा पाठाः संशोधनीया इति धिया क्वापि कृतमोऽप्यंशः परिवर्त्तितः ; प्रकृतपाठानां प्रकटनायैव मन्मित्रवरसम्पादितस्याप्यस्य पुनरापादनारम्भात् । "संवत् १५९७ वर्षीयचैत्रपौर्णमास्यां भृगुदिने लिखितं" गुरुपरम्परयालब्धं स्वपठित मेव पुस्तक मस्य प्रधानादर्शीकृतञ्चेति शम् ॥

॥ श्रीसत्यव्रतशर्म्मा ॥

॥ कलिकाता । सं । १९४८ ॥

# ॥ अथ गृह्यासंग्रहः ॥

॥ अथ प्रथमप्रपाठकः ॥

॥ ॐ नमः सामवेदाय ॥

ॐ अथातः संप्रवक्ष्यामि यदुक्तं ब्रह्मयोनिना ।
ब्राह्मणानाꣳहितार्थाय संस्कारार्थे तु भाषितम् । १
लौकिकः पावको ह्यग्निः प्रथमः परिकीर्तितः ।
अग्निस्तु मारुतो नाम गर्भाधाने विधीयते । २
पुंसवने चान्द्रमसः शुङ्गाकर्मणि शोभनः ।
सीमन्ते मङ्गलो नाम प्रगल्भो जातकर्मणि । ३
नाम्नि च पार्थिवो ह्यग्निः प्राशने च शुचिस्तथा ।
सभ्यनामाथ चूडे तु व्रतादेशे समुद्भवः । ४
गोदाने सूर्यनामा तु केशान्ते ह्यग्निरुच्यते ।
वैश्वानरो विसर्गे तु विवाहे योजकः स्मृतः । ५
चतुर्थ्यान्तु शिखी नाम धृतिरग्निस्तथापरे ।
आवसथ्ये भवो ज्ञेयो वैश्वदेवे तु पावकः । ६
ब्रह्मा वै गार्हपत्ये स्यादीश्वरो दक्षिणे तथा ।
विष्णुराहवनीये स्यादग्निहोत्रे त्रयोऽग्नयः । ७

लक्षहोमे वह्निर्नाम कोटिहोमे हुताशनः ।
प्रायश्चित्ते विधिश्चैव पाकयज्ञे तु साहसः । ८
देवानां हव्यवाहस्तु पितॄणां कव्यवाहनः ।
पूर्णाहुत्यां मृडो नाम शान्तिके वरदस्तथा । ९
पौष्टिके बलदश्चैव क्रोधाग्निश्चाभिचारके ।
वश्यार्थे कामदो नाम वनदाहे तु दूतकः । १०
कोष्ठे तु जठरो नाम क्रव्यादो मृतभक्षणे ।
समुद्रे वाडवो ज्ञेयः क्षये संवर्त्तको भवेत् । ११
एतेऽग्नयः समाख्याताः श्रावयेद् ब्राह्मणः सदा ।
सप्तत्रिंशतिर्विख्याता ज्ञातव्याश्च द्विजेन तु । १२
सप्त जिह्वाः स्फुरन्त्येता हुताशनमुखे स्थिताः ।
याभिर्हव्यंसमश्नन्ति हुतंसम्यग् द्विजोत्तमैः । १३
काली कराली च मनोजवा च
सुलोहिता चैव सुधूम्रवर्णा ।
स्फुलिङ्गिनी चैव शुचिस्मिता च
लेलायमाना इति सप्त जिह्वाः । १४
द्वे शान्तिके द्विगुणा पौष्टिके च ।
तिस्रोऽभिचारिण्यस्ते विश्वकर्माः । १५
एतास्त्वेता विशेषेण ज्ञातव्यास्तु द्विजेन वै ।
ज्ञात्वैव तु होतव्यं यो यत्र विहितो विधिः । १६

अविदित्वा तु यो ह्यग्निं होमयेदविचक्षणः ।
न हुतं न च संस्कारो न च कर्म्मफलं भवेत् । १७
ज्ञात्वा स्वरूप माग्नेयं योऽग्नेराराधनं चरेत् ।
ऐहिकामुष्मिकैः कामैः सारथिस्तस्य पावकः । १८
निःसंशयकरैरर्थैः पुत्रशिष्यहितैषिणा ।
गोभिलाचार्यपुत्रेण कृतं शास्त्रं सुनिश्चितम् । १९
पावकस्य मुखं वक्ष्ये यदुक्तं पद्मयोनिना ।
सप्तजिह्वाप्रमाणान्तु प्रादेशं परिकीर्त्तितम् । २०
प्रमाणं चतुरस्रञ्च वर्तुलं मुखमण्डलम् ।
यदर्थं हूयते वह्नौ तां जिह्वां परिकल्पयेत् । २१
कराली धूमिनी श्वेता लोहिता चाधिलोहिता ।
सुपर्णी पद्मरागी च सप्तैताः परिकीर्त्तिताः । २२
करालीं राक्षसाश्नन्ति धूमिनी मसुरास्तथा ।
श्वेतां नागाः समश्नन्ति पिशाचा लोहितां तथा ।
महालोहितां गन्धर्वाः सुपर्णीञ्च यमस्तथा । २३
पद्मरागी च विख्याता दिव्या जिह्वा हुताशने ।
तस्मात्तु होमयेन्नित्यं सुसमिद्धे हुताशने । २४
विधूमे लेलिहाने च होतव्यं तन्त्रसिद्धये ।
न धूमो न तथा ज्वाला विशुद्धोऽणाविचक्षुषा । २५
प्रभया भाति यत्रैव भगवांस्तत्र तिष्ठति ।

तत्र पूर्णाहुतिं दद्यात्सर्वकामप्रसिद्धये । २६
मारणी राक्षसी रौद्री क्रव्यादी ब्रह्मराक्षसी ।
स्थूलजङ्घा कराली च वज्रहस्ता तथैव च ।
यमदूती च विज्ञेया इत्येताः समिधो नव । २७
विशीर्णा विदला ह्रस्वा वक्रा स्थूला कृशा द्विधा ।
कृमिदष्टा च दीर्घा च वर्जनीयाः प्रयत्नतः । २८
विशीर्णाऽयुःक्षयं कुर्याद् विदला व्याधिसम्भवा ।
ह्रस्वा मृत्युकरी रौद्री दुर्भगत्वन्तु वक्रया । २९
विघ्नानि कुरुते स्थूला कृशा च रिपुवर्द्धिनी ।
द्विधा नाशयते ह्यर्थं भार्यां च प्रियबान्धवान् । ३०
कृमिदष्टाहिभयदा दीर्घा चैव सुतान् हरेत् ।
तस्मात्सर्वप्रयत्नेन वर्जनीयाश्च वर्जयेत् । ३१
अकृशा चैव न स्थूला अशाखा चापलाशिनी ।
सक्षीरा नाधिका न्यूनाः समिधः सर्वकामदाः । ३२
गृह्याकर्मसु सर्वेषु होत्रे प्रतिविधिं ध्रुवम् ।
क्रमशः सम्प्रवक्ष्यामि यो यत्र विहितो विधिः । ३३
अनुक्तान्नपदार्थानि गृह्यावाक्यानि यानि तु ।
तेषां वक्ष्यामि सिद्ध्यर्थं श्लोकैः संग्रहसंज्ञकैः । ३४
पत्नाः पुत्राश्च कन्याश्च जनिष्याश्चापरे सुताः ।
गृह्या इति समाख्याता यजमानस्य दायकाः । ३५

तेषाꣳ संस्कारयोगेन शान्तिकर्म्म क्रियासु च ।
आचार्यविहितः कल्पस्तस्माद् ग्राह्या इति स्थितिः ।३६
भूमेः समूहनं कृत्वा गोमयेनोपलिप्य च ।
द्रव्याण्युत्तरतः स्थाप्य वर्षौ कुर्यादुदङ्मुखीम् । ३७
गोचर्ममात्रं कुर्वीत चतुरस्र मनूपरे ।
सर्वतोऽरत्निमात्रꣳ स्यात् सायं प्रातस्तु होमयोः । ३८
ऋषभैकशतं यत्र गवां तिष्ठति संततम् ।
बालवत्सप्रसूतानां गोचर्म इति तं विदुः । ३९
षट् पञ्च चतुरो वापि त्रयो द्वौ वा शफौ स्मृतौ ।
गोचर्म इति शब्दोऽयं विधियोगे निपात्यते । ४०
प्रागग्रीवं ब्रह्मवर्चस्य मुदग्ग्रीवं यशोत्तमम् ।
पित्र्यं दक्षिणतो नीचं प्रतिष्ठालम्भकꣳ समम् । ४१
वरं गान्तु विजानीयाच्चतुर्वर्षा मिति स्थितिः ।
दक्षिणानां विशिष्टं वै वरं त मपरं विदुः । ४२
चतुर्मुष्टिर्भवेत् किञ्चित् पुष्कलं च चतुर्गुणम् ।
पुष्कलानि च चत्वारि पूर्णपात्रं विधीयते । ४३
यज्ञद्रव्यसमाहारे भोजनाचमने तथा ।
जपे वा होमकाले वा दक्षिणं बाहु मुद्धरेत् । ४४
होमः प्रतिग्रहो दानं भोजनाचमनानि च ।
अवहिर्जानु कर्माणि साङ्गुष्ठान्येव माचरेत् । ४५

आरम्भः सर्वहोमाना माहुर्यज्ञविदो जनाः ।
लक्षणं तत्प्रवक्ष्यामि प्रमाणं दैवतं च यत् । ४६
न नखेन न काष्ठेन नाश्मना मृण्मयेन वा ।
प्रोल्लिखेल्लक्षणं विप्रः सिद्धिकामस्तु यो भवेत् । ४७
नखेन कुनखी चैव काष्ठेन व्याधि मिच्छति ।
अश्मना धननाशः स्यान् मृन्मयेन कलिर्ध्रुवम् । ४८
फलेन फलिनी चैव पुष्पेण श्रिय मिच्छति ।
पर्णेन धनलाभः स्याद्दीर्घ मायुः कुशेन तु । ४९
तस्मात् फलेन पुष्पेण पर्णेनाथ कुशेन वा ।
[illegible] ल्लिखेल्लक्षणं विप्रः सिद्धिकामस्तु कर्मसु । ५०
सव्यं भर्मां प्रतिष्ठाप्य प्रोल्लिखेद्दक्षिणेन तु ।
तावन्नोत्थापयेत्पाणिं यावदग्निं निधापयेत् । ५१
प्राक्कृता पार्थिवी लेखा आग्नेयी चाप्युदक् स्मृता ।
प्राजापत्या च ऐन्द्री च सौमी च प्राक्कृता स्मृता ।५२
उत्करं गृह्य रेखाभ्योऽरत्निमात्रे निधापयेत् ।
द्वार मेवन्तु द्रव्याणां प्रागुदीच्यां दिशि स्मृतम् । ५३
पार्थिवी चैव सौमी च लेखे द्वे द्वादशाङ्गुले ।
एकविंशतिराग्नेयी प्रादेशिन्ये उभे स्मृते । ५४
षडङ्गुलान्तराः कार्या आग्नेयी संहितास्तु याः ।
पार्थिवायास्तु लेखायास्तिस्रस्ता उत्तरोत्तराः । ५५

शुक्लवर्णा पार्थिवी स्यादाग्नेयी लोहिता भवेत् ।
प्राजापत्या भवेत् कृष्णा नीला मैन्द्रीं विनिर्दिशेत् ।
पीतवर्णा च सौमी स्याल्लेखानां वर्णलक्षणम् । ५६
एष लेखविधिः प्रोक्तो गृह्याकर्मसु सर्वसु ।
सूक्ष्मास्ता ऋजवः कार्या लेखास्ताः सुसमाहिताः ।५७
एतानि तत्त्वतो ज्ञात्वा गृह्याकर्मणि कारयेत् । ५८
विष्णुपादपरिक्रान्ता वाराहेणोद्धृता च या ।
शुचिर्मेध्या च पूता च किमर्थमुपलिख्यते । ५९
इन्द्रेण वज्राभिहतः पुरा वृत्रो महासुरः ।
मेदसा तस्य संक्लिन्ना तदर्थमुपलिख्यते । ६०
मेद मुह्यमाणस्य शेषं यत्किञ्च तिष्ठति ।
अन्तर्धानं मृदा चैव दीयते वेदनिश्चयः । ६
द्यूते च व्यवहारे च प्रवृत्ते यज्ञकर्मणि ।
यानि पश्यत्युदासीनः कर्ता तानि न पश्यति । ६२
एकः कर्मनियुक्तः स्याद् द्वितीयस्तन्त्रधारकः ।
तृतीयः प्रश्नं प्रब्रूयात्ततः कर्म समाचरेत् । ६३
कपालैर्भिन्नपात्रैर्वा न लामैर्गोमयेन च ।
अग्निप्रणयनं कार्यं यजमानभयावहम् । ६४
अल्पः प्रणीतो विच्छिन्नोऽसमिद्धश्चापरिश्रुतः ।
त्वरया पुनरानीतो यजमानभयावहः । ६५

तस्माच्छुभेन पात्रेण अविच्छिन्नाकृशं बहु ।
अग्निप्रणयनं कुर्याद् यजमानसुखावहम् । ६६
शुभं पात्रं तु कर्त्तव्यं यजमानसुखावहम् । ६७
शुभं पात्रं तु कांस्यं स्यात्तेनाग्निं प्रणयेद्बुधः ।
तस्याभावे शरावेण नवेनाभिमुखञ्च तम् । ६८
सर्वतः पाणिपादान्तः सर्वतोऽक्षिशिरोमुखः ।
विश्वरूपो महानग्निः प्रणीतः सर्वकर्मसु ॥ ६९
( प्रोक्षणाभ्युक्षणाभ्याञ्च लक्षणोल्लिखननेन वा ।
प्रणीताग्निः प्रकर्त्तव्यो विधिवद्याज्ञिको भवेत् । )
न वस्त्रेण धमेदग्निं न शूर्पेण न पाणिना ।
मुखेनोपधमेदग्निं मुखाद्ध्येषोऽध्यजाय । ७०
वस्त्रेण तु भवेद् व्याधिः शूर्पेण धननाशनम् ।
पाणिना मृत्युमाप्नोति मुखेन सिद्धिभाग्भवेत् । ७१
उदितेऽनुदिते चैव समयाध्युषिते तथा ।
सर्वथा वर्त्तते यज्ञ इतीयं वैदिकी श्रुतिः । ७२
रात्रेः षोडशमे भागे ग्रहनक्षत्रभूषिते ।
अनुदयं विजानीयाद्धोमं तत्र प्रकल्पयेत् ॥ ७३
ततः प्रभातसमये नष्टे नक्षत्रमण्डले ।
रविबिम्बं न दृश्येत समयाध्युषितं स्मृतम् । ७४
रेखामात्रन्तु दृश्येत रश्मिभिश्च समन्वितम् ।

अन्त्या समिद्विवाहस्य विभागः परमेष्ठिनः । ७६
परमेष्ठी विभक्तश्च जुहुयादच्युतान् सकृत् ।
प्रातस्तूष्णीं घृतं वापि प्रातराहुत्युपक्रमः । ७७
आश्वत्थीन्तु शमीगर्भां मरणिं कुर्वीत सोत्तराम् ।
उरोदीर्घां रत्निदीर्घां चतुर्विंशाङ्गुलां तथा ।
चतुरङ्गुलोच्छ्रितां कुर्य्यात् पृथुत्वे न षड़ङ्गुलाम् ।७८
अष्टाङ्गुलः प्रमन्थः स्याच्चात्रं स्यात् द्वादशाङ्गुलम् ।
ओविली द्वादशैव स्यादेतन्मन्थनयन्त्रकम् । ७९
मूलादष्टाङ्गुल मुत्सृज्य त्रीणि त्रीणि च पार्श्वयोः ।
देवयोनिः स विज्ञेयस्तत्र मथ्यो हुताशनः । ८०
मूलादष्टाङ्गुलं त्यक्त्वा अग्रात्तु द्वादशाङ्गुलम् ।
देवयोनिः स विज्ञेयस्तत्र मथ्यो हुताशनः ।
खादिरोऽरत्निदीर्घः स्यात् स्रुवोऽङ्गुष्ठपर्ववृत्तः ।
पाणौ स्रुचं बाहुमात्रीं पाणितलाकारपुष्कराम् ।८२
त्वग्बिलां त्वग्रे कुर्वीत मेक्षणं स्रुक्स्रुवादिवत् ।
शङ्कुस्तैवोपवेशश्च द्वादशाङ्गुल उच्यते । ८३
नवैः शोभनैरगर्भं पवित्रन्तु कुशाग्रजम् ।
ललाटाच्चिबुकं प्राहुर्बाहुमात्राः परिधयः । ८४
दीप्ताग्नो विस्फुलिङ्गे वने दग्धेषु दारुषु ।
न च संस्कारदोषोऽस्ति तथा चरुकपालयोः । ८५

लेखनाभ्युक्षणे कृत्वा निहितेऽग्नौ समिद्धयेत् ।
ततो भूमिग्रहं कृत्वा कुर्य्यात् परिसमूहनम् । ८६
ब्रह्माण मुपसङ्कल्प्य चरुश्रपण मारभेत् ।
ब्रह्माण स्तरणं कुर्याच्चरुर्यत्र न कल्पितः । ८७
ब्रह्मविष्टरयोश्चापि सन्देहे समुपस्थिते ।
ऊर्ध्वकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः । ८८
कतिभिस्तु कुशैर्ब्रह्मा कतिभिर्विष्टरः स्मृतः ।
पञ्चाशद्भिः कुशैर्ब्रह्मा तदर्द्धेन तु विष्टरः । ८९
उदग्धारा मविच्छिन्ना मग्नि मारभ्य दक्षिणम् ।
दद्याद्ब्रह्मासनस्थाने सर्वकर्म्मसु नित्यशः । ९०
एकाग्नौ पितृयज्ञे च ब्रह्माणं नोपकल्पयेत् ।
सायं प्रातश्च होमेषु तथैव बलिकर्म्मसु । ९१
यवव्रीह्यकृतं ज्ञेयं तण्डुलादि कृताकृतम् ।
ओदनन्तु कृतं विद्यात् न तस्य करणं पुनः । ९२
सीमन्तं दर्भपिञ्जल्यास्तिसृभिस्त्रिरुन्नयेत् ।
त्रिभिः श्वेतैश्च शललैः प्रोक्तो वीरतरः शरः । ९३
दिशाश्च विदिशाश्चैव यत्र नोक्ता विचारणा ।
"सर्वतः" तत्र शब्दोऽयं विधियोगे निपात्यते । ९४
विहितप्रतिषिद्धाच्च प्रणीतां नोपकल्पयेत् ।
वैरूपाक्षं जपेन्मन्त्रं प्रपदञ्चैव यज्ञवित् । ९५

परिधीᳪस्तु न कुर्वीत गृह्याकर्मसु याज्ञिकः ।
उदकाञ्जलयस्तिस्रस्ते वै परिधयः स्मृताः । ९६
सर्वेषा मेव होमानाᳪ समिदादौ विधीयते ।
कर्म्मान्ते चैव मेव स्यात् स्वाहां तत न कारयेत् ।९७
इध्म मष्टादश दारु प्रवदन्ति विचक्षणाः ।
दर्शे च पौर्णमासे च क्रियास्वन्यासु विंशतिः । ९८
प्रादेशमात्रं कुर्वीत मेक्षणᳪ समिधस्तथा ।
इध्मः समानवृक्षाणां द्विप्रादेशप्रमाणतः । ९९
प्रागग्राः समिधो देयास्ताश्च काम्ये त्वपाटिताः ।
शान्त्यर्थेषु सशक्ताऽऽर्द्रा विपरीता जिघांसति । ०
इध्मः सन्नहनादानं चरुश्रपण मेव च ।
तूष्णी मेतानि कुर्वीत समस्तञ्चेध्म माददेत् । १०१
आचार्य्यानुमतं वाक्य मेकीयं गृह्यते क्वचित् ।
शेषाण्येकीयवाक्यानि आचार्य्यो न प्रशंसति । १०२
द्रव्याणा मपक्वानाᳪ होमीयानां यथाविधि ।
प्रसिञ्चेत्प्रोक्षणं कुर्य्यादद्भिरभ्युक्षण मेव च । १०३
पवित्र मन्तरे कृत्वा स्थाल्या माज्यᳪ समावपेत् ।
एतत् सम्प्लवनं नाम पश्चादुत्पवनं स्मृतम् । १०४
अग्निना चैव मन्त्रेण पवित्रेण च चक्षुषा ।
चतुर्भिरेव यत् पूतं तदाज्य मितरद्धृतम् । १०५

घृतं वा यदि वा तैलं पयो वा दधि यावकम्।
आज्यस्थाने नियुक्तानां माज्यशब्दो विधीयते। १०६
आज्यानाꣳ सर्पिरादीनाꣳ संस्कारे विधिचोदिते।
अनधिश्रयणं दध्नः शेषाणाꣳ श्रयणं स्मृतम्। १०७
यथा सीमन्तिका नारी पूर्वगर्भेण संस्कृता।
एव माज्यस्य संस्कारः संस्कारे विधिनोदिते। १०८
आज्यस्य हविषं चैव आज्ये पूर्वक्रियाविधिः।
तस्य सम्प्लवनं पूर्वं चरोः पर्य्युक्षणं परम्। १०९
पाणिना मेक्षणेनाथ स्रुवेणैव तु यज्ञविः।
हूयते चानुपस्तीर्य्य उपघातः स उच्यते। ११०
यदुपघातं जुहुयाच्चरावाज्यꣳ समावपेत।
मेक्षणेन तु होतव्यं नाज्यभागौ न स्विष्टकृत्। १११
हुत्वाज्यं परिशेषेण यद् द्रव्य मुपकल्पितम्।
स्रुवेणैव तु तत् स्पृष्टं सम्पातं चैव तं विदुः। ११२
स्थालीपाकाव्रतान्यत्तु यत्र संज्ञा निपात्यते।
तत्राज्यभागौ हुत्वैव स्रुच मास्तीर्य्यावद्यति। ११३।

इति गोभिलाचार्यपुत्रप्रणीते गृह्यासङ्ग्रहे
प्रथमः प्रपाठकः समाप्तः॥

---

॥ अथ द्वितीयप्रपाठकः ॥

स्रुतेभ्यो न प्रचिन्वीयात् यातयामं स्रुतं स्मृतम् ।
स्रुतशेषात्ततो गृह्य यज्ञवास्तुक्रिया तथा । १
यज्ञवास्तुक्रियां कृत्वा विधिदृष्टेन कर्म्मणा ।
आज्यधारामविच्छिन्नां जुहुयात् सार्वकामिकीम् । २
सायंप्रातर्वैश्वदेवे पितृयज्ञे तथैव च ।
कम्बुके गोमये नित्यं व्रतादौ समिधासु च । ३
चैत्ये यूपे व्रीहियवे भूमावप्सु च याज्ञिकैः ।
व्याहृतिभिर्न प्रयोक्तव्या यज्ञवास्तुक्रिया वृथा ।
चरवे यो विधिः प्रोक्तः स यज्ञ इति निश्चयः ।
बलिं तेभ्यो न कुर्वीतापसिद्धार्थबलीन् हरेत् । ५
यत्र मन्त्रा न विद्यन्ते व्याहृतीस्तत्र योजयेत् ।
मन्त्राणामेव चादेशे मन्त्रात् कर्म समाचरेत् । ६
भूराद्या व्याहृतयो वेदेभ्यो निःसृताः पुरा ।
महत्त्वं व्याहृतित्वञ्च प्राप्ताः स्वेनैव कर्मणा । ७
ॐकारजननात्तासां महत्वं परिभाष्यते ।
व्याहृत्या व्याहृतित्वञ्च तेन त्रैविद्यतां ययुः । ८
ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।

कण्ठं भित्त्वा विनिर्यातौ तेनैतौ मङ्गलावुभौ । ९
अथैताः स्वध्याहृतयोऽव्ययीयस्यः पराः स्मृताः ।
ऐरावतः प्रतिच्चेत् वेदान्तेष्वाश्रिताश्च याः । १०
मध्ये स्थण्डिल मन्त्रे च वारिणा परिसंवृतम् ।
अविद्यासिनए ऊर्द्ध विद्यात्ताद्दशं कर्मणा विदुः । ११
यत् विद्या च वित्तञ्च सत्यं धर्मः शमो दमः ।
अभिरूपः स विज्ञेयः स्वाश्रमे यो व्यवस्थितः । १२
लौकिके लोकसामान्ये क्रव्यादाग्नौ वृथा हुतम् ।
याज्ञिकं पुण्य मायुष्यो कर्मणा नोपपद्यते । १३
वैदिके लौकिके वाऽपि यज्ञ होति प्रयत्नतः ।
वैदिके ब्रह्मलोकः स्यात् लौकिके पापनाशनम् । १४
स्ववर्णाभिरनिन्द्याभिरङ्गिरक्षतमिश्रितैः ।
स्नानं चतुर्भिः कलशैः स्त्रीभिः स्त्रीं यत्र प्लावनम् । १५
गौड़ी पैष्टी च माध्वी च विज्ञेयास्त्रिविधाः सुरा ।
पाणिकर्मणि गौड़ी स्यात्तथा माध्वधमा सुरा । १६
नग्निकान्तु वदेत् कन्यां यावन्नर्त्तुमती भवेत् ।
ऋतुमती त्वनग्निका तां प्रयच्छेत्वनग्निकाम् । १७
अप्राप्ता रजसो गौरी प्राप्ते रजसि रोहिणी ।
अव्यञ्जिता भवेत् कन्या कुचहीना तु नग्निका । १८
व्यञ्जनैस्तु समुत्पन्नैः सोमो भुञ्जीत कन्यकाम् ।

पयोधरैस्तु गन्धर्व्वा रजसाग्निः प्रकीर्त्तितः । १९
तस्माद्व्यञ्जनोपेता मरजा मपयोधराम् ।
अभुक्ताञ्चैव सोमाद्यैः कन्यकान्नु प्रशस्यते । २०
वेदिपिण्डात् क्रियावती सीतायाः फलते कृषिः ।
अक्ताभ्या च ह्रदे ज्ञेया गोष्ठे भवति गोमती । २१
चतुष्पथे प्रकीर्णा स्यात् द्यूतस्थाने कलिप्रिया ।
श्मशाने म्रियते भर्त्ता वन्ध्या भवति चोषरे । २२
नवमे सर्व एवैते कन्यायाः परिगृह्यन्ते ।
पाणिग्रहणमन्त्रास्तु नियतं दारलक्षणम् । २३
विवाहे गो विधिः प्रोक्तो मन्त्रा दाम्पत्यवाचकाः
वरस्तु तान् जपेत् सर्वान् ऋत्विग्राजन्यवैश्ययोः ।२४
महानदीषु या आपः कौप्यान्याश्च ह्रदेषु च ।
गन्धवर्णरसैर्युक्ता ध्रुवास्ता इति निश्चयः । २५
गन्धमाल्यैरलङ्कृत्य सकुम्भो वाग्यतः शुचिः ।
धारयेत् त्रिषु वर्णेषु प्रावृतांसो द्विजोत्तमः । २६
यदा निष्क्रामयेत्कन्यां वरः पाणिं जिघृक्षयन् ।
अग्निप्रदक्षिणं कृत्वा कटस्तीर्णं पदं व्रजेत् । २७
पदा प्रवृद्य पन्थानं पतियानं सञ्जपेद्वधूः ।
वरो वाऽत्र जपेन्मन्त्र माकटान्तादिति स्थितिः । २८
लाजामाज्यं स्रुवं कुम्भं प्राजनाश्मान मेव च ।

प्रदक्षिणानि कुर्वीत दम्पती तु विना गृही । २९
प्राजग्राह मुद्ग्राहं ब्रह्माणा मृत्विजं तथा ।
एतानि वाह्यतः कृत्वा शेषाणान्तु प्रदक्षिणम् । ३०
दक्षिणां दिश मास्थाय यमो मृतुश्च तिष्ठतः ।
तयोस्तु रक्षणार्थाय तस्माद् ब्रह्मा वहिर्भवेत । ३१
सोमः प्रकृतिरेखा हि लाजानाश्रित्य तिष्ठति ।
विरुद्ध माज्यं सोमेन नाभिघारण मर्हति । ३२
शमीपलाशमिश्राणां लाजाना मभिघारणम् ।
पूर्वाणां घृतमिश्राणा माचार्यैः कल्पितं यथा । ३३
तुषं लाजाञ्जलिर्बध्वा हूयतेऽङ्गुलिपर्वभिः ।
एवं लाजहविःशेषं होतव्यं शूर्पजिह्वया । ३४
अवसितान्तु विधिना पाणिग्राहन्तु प्राजनी ।
रक्षार्थ मनुगच्छेत समाहं त्र्याह मेव वा । ३५
ब्राह्मस्यार्षस्य दैवस्य प्राजापत्यस्य याज्ञिकैः ।
पूर्वं होमविधिः प्रोक्तः पश्चात् परिणयः स्मृतः । ३६
गान्धर्वासुरपैशाचा विवाहा राक्षसाश्च ये ।
तेषां परिणयः पूर्वं पश्चाद्धोमो विधीयते । ३७
उद्वर्त्तनं नखच्छेदो रोमच्छेदन मेव च ।
स्रंसनं मेखलायाश्च क्रासनानि विदुर्बुधाः । ३८
चूडाकर्मणि सीमन्ते यश्च प्राक्ः सदा गृहे ।

विवाहे चैव लाजानां नोक्तो निर्वपणे विधिः ।३९
दक्षिणाकपर्दा वासिष्ठा आत्रेयास्त्रिकपर्द्दिनः ।
आङ्गिरसः पञ्चचूडा मुण्डा भृगवः शिखिनोऽन्ये । ४०
सर्वयज्ञेषु विप्राणा मग्निः पूर्वं प्रवर्त्तते ।
तस्मात् सुरोत्तमा ह्यापोऽग्निरेवाभिषेचयेत् । ४१
ब्रह्मचारी व्रतादेशे व्रतनाम प्रवाचयेत् ।
चा॰र्य्य यावदन्ताय सावित्रे चाप्यकीर्त्तनम् । ४२
समा मासा महोरात्रास्तुल्या ब्राह्मणचोदिताः ।
सावित्र मष्टभिर्वर्षैः कार्य्यं मासैर्दिनैश्च वा । ४३
सावित्रं यावदन्ताय धार्य्यं सर्वाश्रमस्थितैः ।
चूडाको॰धर्मेण गोदाने चास्य वापनम् । ४४
विप्राणा मग्निराचार्य्य इन्द्रस्त्राता व्रते व्र॰ ।
तस्मात् सर्वव्रतान्तेषु चरुरैन्द्रो विधीयते । ४५
अजिनं सर्वदैवत्य मैन्द्रो दण्ड इति स्मृतः ।
सावित्रीं मेखला माहुस्तस्मात् सर्व्वाणि धारयेत् ।४६
मेखला मजिनं दण्ड मुपवीतं कमण्डलुम् ।
अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रतः ।४७
यज्ञोपवीतं कुर्वीत सूत्रेण नवतान्तवम् ।
देवतास्तत्र वक्ष्यामि आनुपूर्व्येण याः स्मृताः । ४८
ॐकारः प्रथमस्तन्तुर्द्वितीयस्त्वग्निदैवतः ।

तृतीयो नागदैवत्यश्चतुर्थः सोमदैवतः । ४९
पञ्चमः पितृदैवत्यः षष्ठश्चैव प्रजापतिः ।
सप्तमो वासुदैवत्योऽष्टमो यमदैवतः । ५०
नवमः सर्वदैवत्य इत्येते नव तन्तवः ।
द्विगुणं त्रिगुणं वापि एकग्रन्थिकृतं विदुः । ५१
केनैवोत्पादितं सूत्रम् केन वा त्रिगुणीकृतम् ।
केन वास्य कृतो ग्रन्थिः केन मन्त्रेण मन्त्रितम् । ५२
ब्रह्मणोत्पादितं सूत्रं विष्णुना त्रिगुणीकृतम् ।
रुद्रेण तु कृतो ग्रन्थिः सावित्र्या चाभिमन्त्रितम् । ५३
स्तनादूर्ध्वमधो नाभेर्न कर्त्तव्यं कथञ्चन ।
स्तनादूर्ध्वं श्रियं हन्ति नाभ्यधस्तात्तपःक्षयः । ५४
गोभिर्वालपवित्रेण धार्य्यमाणेन नित्यशः ।
न स्पृशन्तीह पापानि श्रियं गात्रेषु तिष्ठति । ५५
गोभिर्वालपवित्रेण यस्तु सन्ध्या मुपासते ।
गोधर्मेष्वेव वर्त्तन्ते न स पापेन लिप्यते । ५६
गोभिर्वालपवित्रेण यस्तु ह्यग्नि मुपासते ।
पञ्चाग्नयो हुतास्तेन यावज्जीवं न संशयः । ५७
आचार्य्येणाभ्यनुज्ञात आचार्य्याग्नौ विधिर्यथा ।
प्रणीतेऽग्नौ समिद्द्याद्भक्त्या सा ब्रह्मचारिणाम् । ५८
दधि सर्पिश्च संयुक्तः प्रोक्तो ह्येष पृषातकः ।

होमकाले तु तस्याग्नेः स्थान मुत्तरपूर्वतः । ५९
कामग्रा प्रिया च हव्या च इड़ा रम्भा सरस्वती ।
मही विश्रुता चाघ्न्या च गोनामानि विदुर्बुधाः । ६०
मधुपर्कं पिबेन्मन्त्र मन्त्रतो हृदयं स्पृशेत् ।
अपूपानां चरोश्चापि सर्वस्थानां न्यनक्ति च । ६१
द्‌ा ग्नतसुमनस आपश्चेति चतुष्टयम् ।
अर्घ्य एष प्रदातव्यो गृह्ये ये अर्घ्यार्हाः स्मृताः । ६२
दध्यक्षतसुमनसो घृतं सिद्धार्थका यवाः ।
पानीयञ्चैव दर्भाश्च अष्टाङ्गो ह्यर्घ्य उच्यते । ६३
सर्पिषा मधुना दध्ना अर्च्चयेदर्हयन् सदा ।
ऋषिप्रोक्तेन विधिना मधुपर्केण याज्ञिकाः । ६४
कांसे नितय मासिच्य कंसेन परिसंवृतम् ।
परिश्रितेषु देयः स्यान्मधुपर्क इति ध्रुवम् । ६५
मधुपर्के तथा सोमे अप्सु प्राणाहुतीषु च ।
अनुच्छिष्टो भवेद्विप्रो यथा वेदविदो विदुः । ६६
प्राणाहुतिषु सोमेषु मधुपर्के तथैव च ।
आस्यहोमेषु सर्वेषु नोच्छिष्टो भवति द्विजः । ६७

दधनि पयसि वा कृतान्नं
मधु दद्यान्मधुपर्क मेव माहुः ।
दधिमधूदके वापि सक्ता-
वितोते विहिताश्रयस्तु मन्थाः । ६८

पविचान्तर्हितं कृत्वा चरुं प्राज्ञोभिघारयेत् ।
उद्वास्य चैवं विधिना एवं तन्त्रं न लुप्यते । ६९
चतुर्मुष्टिश्चरुः कार्य्यश्चतुर्णा मुत्तरोऽपि वा ।
कपालस्य प्रमाणेन अपूपानष्टकाविधौ । ७०
चतुर्भागं पाणितलात् कपालं याज्ञिका विदुः ।
पृथक्कपालान् कुर्वीत अपूपानष्टकाविधौ । ७१
वपाहोमे मुखे चैव होमे स्विष्टकृते तथा ।
व्याहृतीर्न प्रयोक्तव्या मुखे नाप्सु च लक्षणाम् । ७२
सन्ततः प्रणवः कार्य्यः पितृयज्ञेषु ब्राह्मणैः ।
उपांशुकरणञ्चापि सह कर्त्रा समस्वरैः । ७३
कालातीतेषु होमेषु उत्तरेष्वागतेषु च ।
कालातीतानि हुत्वैव उत्तराणि समारभेत् । ७४
यान्यतीतान्यतिक्रमा उत्तराणि समारभेत् ।
न देवाः पितरस्तस्य प्रतिगृह्णन्ति तद्धविः । ७५
प्रक्रमणे तथोद्वाहे होमे स्विष्टकृते तथा ।
यस्यां दिशि विधिं प्राहुस्तां माहुरपराजिताम् । ७६
अयुक्तं मन्त्रलवणैरपर्य्युषित मेव च ।
हविष्य मेतदन्नाद्य ममुरैश्चाप्यसंयुतम् । ७७
ह्रस्वः सर्वखल्वाश्च कोद्रवा वरटैः सह ।
अकृतायथवे भक्ष्या येषां प्रोक्ता हविर्गुणाः । ७८

नवयज्ञेऽधिकारस्थाः श्यामाका व्रीहयो यवाः ।
नाश्नीयान्न च हुत्वैव मन्येष्वनियमः स्मृतः । ७९
श्राद्धे ब्राह्मण एकश्चेत् स्वल्पञ्च प्रकृतं यदि ।
वैश्वदेवं कथं तत्र इति मे संशयो महान् । ८०
प्रणीतान्नाय मुद्धृत्य सर्वस्य प्रकृतस्य तु ।
ब्रा णाय प्रदातव्य मेवं भवति सम्पदे । ८१
यद्येकं भोजयेच्छ्राद्धे छन्दोगं तत्र भोजयेत् ।
ऋचो यजूंषि सामानि त्रैविद्यं तत्र तिष्ठति । ८२
ऋग्भिस्तु पितरः प्रीता यजुर्भिस्तु पितामहाः ।
सामभिः पपितामहास्तस्मात्तं तत्र भोजयेत् । ८३
अटेत पृथिवीं कृत्स्नां सशैलवनकाननाम् ।
लभेत यदि पित्रर्थे साम्ना मन्त्रचिन्तकम् । ८४
दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणाश्च विशेषतः ।
नैते निर्माल्यतां यान्ति नियोज्यास्तु पुनः पुनः । ८५
दर्भाः पिण्डेषु निर्माल्या विप्राः प्रेतान्नभोजने ।
मन्त्राः शूद्रेषु निर्माल्यानिर्म्माल्याश्चितिपावकाः । ८६
पिण्डार्थं ये स्तृता दर्भास्तर्पणान्तु कृतन्तु यैः ।
धृतैः कृते च विण्मुत्रे त्यागस्तेषां विधीयते । ८७
उरसि पितरो भुङ्क्ते वामपार्श्वे पितामहाः ।
प्रपितामहा दक्षिणतः पृष्ठतः पिण्डतर्षुकाः । ८८

क्षुते निष्ठीवने चैव दन्तोच्छिष्टे तथानृते ।
पतितानाञ्च सम्भाषे दक्षिणं श्रवणं स्पृशेत् । ८९
मरुतः सोम इन्द्राग्नी मित्रावरुणौ तथैव च ।
एते सर्वे च विप्रस्य श्रोत्रे तिष्ठन्ति दक्षिणे । ९०
आत्मतन्त्रेषु यन्नोक्तं तत् कुर्य्यात् पारतन्त्रिकम् ।
विशेषाः खलु सामान्या ये चोक्ता वेदवादिभिः । ९१
ऊनो वाप्यतिरिक्तो वा यः स्वशाखोक्त माचरेत् ।
तेन सन्तनुयाद् यज्ञं न कुर्य्यात् पारतन्त्रिकम् । ९२
यः स्वशाखोक्त मुत्सृज्य परशाखोक्त माचरेत् ।
अप्रमाण मृषिं कृत्वा सोऽन्धे तमसि मज्जति । ९३
पुनरुक्त मतिक्रान्तं यच्च सिंहावलोकितम् ।
गोभिलं ये न गृह्णन्ति न ते ज्ञास्यन्ति गोभिलम् । ९४
गोभिलाचार्य्यपुत्रस्य योऽधीते संग्रहं पुमान् ।
सर्वकर्म्मस्वसंमूढः परां सिद्धि मवाप्नुयात् । ९५ ।

इति श्रीगोभिलाचार्यपुत्रप्रणीते गृह्यासङ्ग्रहे
द्वितीयः प्रपाठकः समाप्तः ॥

॥ समाप्तश्चायं गृह्यासंग्रहः ॥

---

# ॥ अथ गृह्यासंग्रहः ॥

( गोभिलीयगृह्यपरिशिष्टविशेषः )

॥ भगवता गोभिलाचार्यपुत्रेण प्रणीतः ॥

॥ श्रीसत्यव्रतशर्म्मणा प्रकाशितः ॥


CALCUTTA.

Printed by Mohendra Nath Sircar.

16—1, GHOSHE'S LANE, SATYA PRESS.

1891.

॥ संक्षिप्तविज्ञापनम् ॥

—०—

अथ वाक्यार्थज्ञानं सुगमयितुम्, छन्दोदोषं निवारयितुम्, ग्रन्थान्तरविरोध मपगमयितुं वा पाठाः संशोधनीया इति धिया नात्रापि कतमोऽप्यंशः परिवर्त्तितः; प्रकृतपाठानां प्रकटनायैव मल्मित्रवरसम्पादितस्याप्यस्य पुनरापादनारम्भात्। "संवत् १५९७ वर्षीयचैत्रपौर्णमास्यां भृगुदिने लिखितं" गुरुपरम्परयालब्धं स्वपठित मेव पुस्तक मस्य प्रधानादर्शीकृतञ्चेति शम् ॥

॥ श्रीसत्यव्रतशर्म्मा ॥

॥ कलिकाता । संवत् १९४८ ॥

# ॥ अथ गृह्यासंग्रहः ॥

॥ अथ प्रथमप्रपाठकः ॥

॥ ॐ नमः सामवेदाय ॥

ॐ अथातः संप्रवक्ष्यामि यदुक्तं पद्मयोनिना ।
ब्राह्मणानाᳫहितार्थाय संस्कारार्थे तु भाषितम् । १
लौकिकः पावको ह्यग्निः प्रथमः परिकीर्तितः ।
अग्निस्तु मारुतो नाम गर्भाधाने विधीयते । २
पुंसवने चान्द्रमसः शुङ्गाकर्मणि शोभनः ।
सीमन्ते मङ्गलो नाम प्रगल्भो जातकर्मणि । ३
नाम्नि च पार्थिवो ह्यग्निः प्राशने च शुचिस्तथा ।
सभ्यनामाथ चूडे तु व्रतादेशे समुद्भवः । ४
गोदाने सूर्यनामा तु केशान्ते ह्यग्निरुच्यते ।
वैश्वानरो विसर्गे तु विवाहे योजकः स्मृतः । ५
चतुर्थ्यान्तु शिखी नाम धृतिरग्निस्तथापरे ।
आवसथ्ये भवो ज्ञेयो वैश्वदेवे तु पावकः । ६
ब्रह्मा वै गार्हपत्ये स्यादीश्वरो दक्षिणे तथा ।
विष्णुराहवनीये स्यादग्निहोत्रे त्रयोऽग्नयः । ७

लक्षहोमे वह्निर्नाम कोटिहोमे हुताशनः ।
प्रायश्चित्ते विधिश्चैव पाकयज्ञे तु साहसः । ८
देवानाꣳ हव्यवाहस्तु पितॄणां कव्यवाहनः ।
पूर्णाहुत्यां मृडो नाम शान्तिके वरदस्तथा । ९
पौष्टिके बलदश्चैव क्रोधाग्निश्चाभिचारके ।
वश्यार्थे कामदो नाम वनदाहे तु दूतकः । १०
कोष्ठे तु जठरो नाम क्रव्यादो मृतभक्षणे ।
समुद्रे वाड़वो ज्ञेयः क्षये संवर्त्तको भवेत् । ११
एतेऽग्नयः समाख्याताः श्रावयेद् ब्राह्मणः सदा ।
सप्तत्रिꣳशतिर्विख्याता ज्ञातव्याश्च द्विजेन तु । १२
सप्त जिह्वाः स्फुरन्त्येता हुताशनमुखे स्थिताः ।
याभिर्हव्यꣳसमश्नन्ति हुतꣳसम्यग् द्विजोत्तमैः । १३

काली कराली च मनोजवा च
सुलोहिता चैव सुधूम्रवर्णा ।
स्फुलिङ्गिनी चैव शुचिस्मिता च
लेलायमाना इति सप्त जिह्वाः । १४
द्वे शान्तिके द्विगुणा पौष्टिके च ।
तिस्रोऽभिचारिण्यस्ते विश्वघ्नाः । १५

एतास्त्वोक्ता विशेषेण ज्ञातव्यास्तु द्विजेन वै ।
पाज्ञयैव तु होतव्यं यो यत्र विहितो विधिः । १६

अविदित्वा तु यो ह्यग्निं होमयेदविचक्षणः ।
न हुतं न च संस्कारो न च कर्म्मफलं भवेत् । १७
ज्ञात्वा स्वरूप माग्नेयं योऽग्नेराराधनं चरेत् ।
ऐहिकामुष्मिकैः कामैः सारथिस्तस्य पावकः । १८
निःसंशयकरैरर्थैः पुत्रशिष्यहितैषिणा ।
गोभिलाचार्यपुत्रेण कृतं शास्त्रं सुनिश्चितम् । १९
पावकस्य मुखं वक्ष्ये यदुक्तं पद्मयोनिना ।
सप्तजिह्वाप्रमाणन्तु प्रादेशं परिकीर्त्तितम् । २०
प्रमाणं चतुरस्रस्य वर्त्तुलं मुखमण्डलम् ।
यदर्थं हूयते वह्नौ तां जिह्वां परिकल्पयेत् । २१
कराली धूमिनी श्वेता लोहिता चातिलोहिता ।
सुपर्णी पद्मरागी च सप्तैताः परिकीर्त्तिताः । २२
करालीं राक्षसाश्नन्ति धूमिनी मसुरास्तथा ।
श्वेतां नागाः समश्नन्ति पिशाचा लोहितां तथा ।
महालोहितां गन्धर्वाः सुपर्णीश्च यमस्तथा । २३
पद्मरागी च विख्याता दिव्या जिह्वा हुताशने ।
तस्यान्तु होमयेन्नित्यं सुसमिद्धे हुताशने । २४
विधूमे लेलिहाने च होतव्यं तन्त्रसिद्धये ।
न धूमो न तथा ज्वाला विशुद्धोष्णाविचक्षुषा । २५
प्रभया भाति यत्रैव भगवांस्तत्र तिष्ठति ।

तत्र पूर्णाहुतिं दद्यात्सर्वकामप्रसिद्धये । २६
मारणी राक्षसी रौद्री क्रव्यादी ब्रह्मराक्षसी ।
स्थूलजङ्घा कराली च वज्रहस्ता तथैव च ।
यमदूती च विज्ञेया इत्येताः समिधो नव । २७
विशीर्णा विदला ह्रस्वा वक्रा स्थूला कृशा द्विधा ।
कृमिदष्टा च दीर्घा च वर्जनीयाः प्रयत्नतः । २८
विशीर्णाऽऽयुःक्षयं कुर्याद् विदला व्याधिसम्भवा ।
ह्रस्वा मृत्युकरी रौद्री दुर्भगत्वन्तु वक्रया । २९
विघ्नानि कुरुते स्थूला कृशा च रिपुवर्द्धिनी ।
द्विधा नाशयते ह्यर्थं भार्यां च प्रियबान्धवान् । ३०
कीटदष्टातिभयदा दीर्घा चैव सुतान् हरेत् ।
तस्मात्सर्वप्रयत्नेन वर्जनीयाश्च वर्जयेत् । ३१
अकृशा चैव न स्थूला अशाखा चापलाशिनी ।
सक्षीरा नाधिका ऽन्यूनाः समिधः सर्वकामदाः । ३२
गृह्याकर्मसु सर्वेषु होत्रे प्रतिविधिं ध्रुवम् ।
क्रमशः सम्प्रवक्ष्यामि यो यत्र विहितो विधिः । ३३
अनुच्छिन्नपदार्थानि गृह्यावाक्यानि यानि तु ।
तेषां वक्ष्यामि सिध्यर्थं श्लोकैः संग्रहसंज्ञकैः । ३४
पत्नाः पुत्राश्च कन्याश्च जनिष्याश्चापरे सुताः ।
गृह्या इति समाख्याता यजमानस्य दायकाः । ३५

तेषां संस्कारयोगेन शान्तिकर्म्मक्रियासु च ।
आचार्यविहितः कल्पस्तस्माद् गृह्या इति स्थितिः ।३६
भूमेः समूहनं कृत्वा गोमयेनोपलिप्य च ।
द्रव्याण्युत्तरतः स्थाप्य हर्षौ कुर्यादुदङ्मुखीम् । ३७
गोचर्ममात्रं कुर्वीत चतुरस्र मनूषरे ।
सर्वतोऽरत्निमात्रं स्यात् सायं प्रातस्तु होमयोः । ३८
ऋषभैकशतं यत्र गवां तिष्ठति संवृतम् ।
बालवत्सप्रसूतानां गोचर्म इति तं विदुः । ३९
षट् पञ्च चतुरो वापि त्रयो द्वौ वा शफौ स्मृतौ ।
गोचर्म इति शब्दोऽयं विधियोगे निपात्यते । ४०
प्राग्ग्रीवं ब्रह्मवर्चस्य मुदग्ग्रीवं यशोत्तमम् ।
पित्र्यं दक्षिणतो नीचं प्रतिष्ठालम्भकं समम् । ४१
वरं गान्तु विजानीयाच्चतुर्वर्षा मिति स्थितिः ।
दक्षिणानां विशिष्टं वै वरं त मपरं विदुः । ४२
चतुर्मुष्टिर्भवेत् किञ्चित् पुष्कलं च चतुर्गुणम् ।
पुष्कलानि च चत्वारि पूर्णपात्रं विधीयते । ४३
यज्ञद्रव्यसमाहारे भोजनाचमने तथा ।
जपे वा होमकाले वा दक्षिणं बाहु मुद्धरेत् । ४४
होमः प्रतिग्रहो दानं भोजनाचमनानि च ।
अवहिर्जानु कर्माणि साङ्गुष्ठान्येव माचरेत् । ४५

आरम्भः सर्वहोमानां माहुर्यज्ञविदो जनाः ।
लक्षणं तत्प्रवक्ष्यामि प्रमाणं दैवतं च यत् । ४६
न नखेन न काष्ठेन नाश्मना मृण्मयेन वा ।
प्रोल्लिखेल्लक्षणं विप्रः सिद्धिकामस्तु यो भवेत् । ४७
नखेन कुनखी चैव काष्ठेन व्याधि मिच्छति ।
अश्मना धननाशः स्यान् मृन्मयेन कलिर्ध्रुवम् । ४८
फलेन फलिनी चैव पुष्पेण श्रिय मिच्छति ।
पर्णेन धनलाभः स्याद्दीर्घ मायुः कुशेन तु । ४९
तस्मात् फलेन पुष्पेण पर्णेनाथ कुशेन वा ।
प्रोल्लिखेल्लक्षणं विप्रः सिद्धिकामस्तु कर्मसु । ५०
सव्यं भूमौ प्रतिष्ठाप्य प्रोल्लिखेद्दक्षिणेन तु ।
तावन्नोत्थापयेत्पाणिं यावदग्निं निधापयेत् । ५१
प्रागग्रा पार्थिवी लेखा आग्नेयी चाप्युदक् स्मृता ।
प्राजापत्या च ऐन्द्री च सौमी च प्रागग्रा स्मृता । ५२
उत्करं गृह्य रेखाभ्योऽरत्निमात्रे निधापयेत् ।
द्वार मेवन्तु द्रव्याणां प्रागुदीच्यां दिशि स्मृतम् । ५३
पार्थिवी चैव सौमी च लेखे द्वे द्वादशाङ्गुले ।
एकविंशतिराग्नेयी प्रादेशिन्ये उभे स्मृते । ५४
षडङ्गुलान्तराः कार्या आग्नेयी संहितास्तु याः ।
पार्थिवायास्तु लेखायास्तिस्रस्ता उत्तरोत्तराः । ५५

शुक्लवर्णा पार्थिवी स्यादाग्नेयी लोहिता भवेत् ।
प्राजापत्या भवेत् कृष्णा नीला मैन्द्रीं विनिर्दिशेत् ।
पीतवर्णा च सौम्यो स्याल्लेखानां वर्णलक्षणम् । ५६
एष लेखविधिः प्रोक्तो गृह्याकर्मसु सर्वसु ।
सूक्ष्मास्ता ऋजवः कार्या लेखास्ताः सुसमाहिताः ।५७
एतानि तत्त्वतो ज्ञात्वा गृह्याकर्मणि कारयेत् । ५८
विष्णुपादपरिक्रान्ता वाराहेणोद्धृता च या ।
शुचिर्मेध्या च पूता च किमर्थ मुपलिख्यते । ५९
इन्द्रेण वज्राभिहतः पुरा वृत्रो महासुरः ।
मेदसा तस्य संक्लिन्ना तदर्थ मुपलिख्यते । ६०
मेद गुह्रियमाणस्य शेषं यत्किञ्च तिष्ठति ।
अन्तर्धानं मृदा चैव दीयते वेदनिश्चयः । ६१
द्यूते च व्यवहारे च प्रवृत्ते यज्ञकर्मणि ।
यानि पश्यत्युदासीनः कर्ता तानि न पश्यति । ६२
एकः कर्मनियुक्तः स्याद् द्वितीयस्तन्त्रधारकः ।
तृतीयः प्रश्नं प्रब्रूयात्ततः कर्म समाचरेत् । ६३
कपालैर्भिन्नपात्रैर्वा न त्वामैर्गोमयेन च ।
अग्निप्रणायनं कार्यं यजमानभयावहम् । ६४
अल्पः प्रणीतो विच्छिन्नोऽसमिद्धश्चापरिश्रुतः ।
त्वरया पुनरानीतो यजमानभयावहः । ६५

तस्माच्छुभेन पात्रेण अविच्छिन्नाक्रमं बहु ।
अग्निप्रणयनं कुर्याद् यजमानसुखावहम् । ६६
शुभं पात्रं तु कर्त्तव्यं यजमानसुखावहम् । ६७
शुभं पात्रं तु कांस्यं स्यात्तेनाग्निं प्रणयेद्बुधः ।
तस्याभावे शरावेण नवेनाभिमुखञ्च तम् । ६८
सर्वतः पाणिपादान्तः सर्वतोक्षिशिरोमुखः ।
विश्वरूपो महानग्निः प्रणीतः सर्वकर्मसु ॥ ६९
( प्रोक्षणाभ्युक्षणाभ्याञ्च लक्षणोल्लिखननेन वा ।
प्रणीताग्निः प्रकर्त्तव्यो विधिवद्याज्ञिको भवेत् । )
न वस्त्रेण धमेदग्निं न शूर्पेण न पाणिना ।
मुखेनोपधमेदग्निं मुखाध्येषोऽध्यजायत । ७०
वस्त्रेण तु भवेद् व्याधिः शूर्पेण धननाशनम् ।
पाणिना मृत्युमाप्नोति मुखेन सिद्धिभाग्भवेत् । ७१
उदितेऽनुदिते चैव समयाध्युषिते तथा ।
सर्वथा वर्त्तते यज्ञ इतीयं वैदिकी श्रुतिः । ७२
रात्रेः षोड़शमे भागे ग्रहनक्षत्रभूषिते ।
अनुदयं विजानीयाद्धोमं तत्र प्रकल्पयेत् ॥ ७३
ततः प्रभातसमये नष्टे नक्षत्रमण्डले ।
रविबिम्बं न दृश्येत समयाध्युषितं स्मृतम् । ७४
रेखामात्रन्तु दृश्येत रश्मिभिश्च समन्वितम् ।

अन्त्या समिद्द्विबाहुश्च विभागः परमेष्ठिनः । ७६
परमेष्ठी विभक्तश्च जुहुयादक्षतान् सकृत् ।
प्रातस्तूष्णीं घृतं वापि प्रातराहुत्युपक्रमः । ७७
आश्वत्थीन्तु शमीगर्भां मरणिं कुर्व्वीत सोत्तराम् ।
उरोदीर्घां रत्निदीर्घां चतुर्विंशाङ्गुलां तथा ।
चतुरङ्गुलोच्छ्रितां कुर्य्यात् पृथुत्वे न षडङ्गुलाम् । ७८
अष्टाङ्गुलः प्रमन्थः स्याच्चात्रं स्यात् द्वादशाङ्गुलम् ।
ओविली द्वादशैव स्यादेतन्मन्थनयन्त्रकम् । ७९
मूलादष्टाङ्गुल मुत्सृज्य त्रीणि त्रीणि च पार्श्वयोः ।
देवयोनिः स विज्ञेयस्तत्र मथ्यो हुताशनः । ८०
मूलादष्टाङ्गुलं त्यक्त्वा अग्रात्तु द्वादशाङ्गुलम् ।
देवयोनिः स विज्ञेयस्तत्र मथ्यो हुताशनः । ८१
खादिरोऽरत्निदीर्घः स्यात् स्रुवोऽङ्गुष्ठपर्वद्वृत्तः ।
पाणौ स्रुचं बाहुमात्रीं पाणितलाकारपुष्कराम् । ८२
त्वग्बिलां त्वग्रे कुर्वीत मेचणं स्रुक्स्रुवादिवत् ।
शङ्कुस्त्वेवोपवेशश्च द्वादशाङ्गुल इष्यते । ८३
नवैः शोभनैरगर्भं पवित्रन्तु कुशाग्रजम् ।
ललाटाच्चिबुकं प्राहुर्बाहुमात्राः परिधयः । ८४
दीप्ताग्नौ विस्फुलिङ्गे वने दग्धेषु दारुषु ।
न च संस्कारदोषोऽस्ति तथा चरुकपालयोः । ८५

लेखनाभ्युक्षणे कृत्वा निहितेऽग्नौ समिद्दधेत् ।
ततो भूमिग्रहं कृत्वा कुर्य्यात् परिसमूहनम् । ८६
ब्रह्माण मुपसङ्कल्प्य चरुश्रपण मारभेत् ।
ब्रह्माणं स्तरणं कुर्याच्चरुर्यत्र न कल्पितः । ८७
ब्रह्मविष्टरयोश्चापि सन्देहे समुपस्थिते ।
ऊर्ध्वकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः । ८८
कतिभिस्तु कुशैर्ब्रह्मा कतिभिर्विष्टरः स्मृतः ।
पञ्चाशद्भिः कुशैर्ब्रह्मा तदर्द्धेन तु विष्टरः । ८९
उदगधारा मविच्छिन्ना मग्नि मारभ्य दक्षिणम् ।
दद्याद्ब्रह्मासनस्थाने सर्वकर्म्मसु नित्यशः । ९०
एकाग्नौ पितृयज्ञे च ब्रह्माणं नोपकल्पयेत् ।
सायं प्रातश्च होमेषु तथैव बलिकर्म्मसु । ९१
यवव्रीह्यकृतं ज्ञेयं तण्डुलादि कृताकृतम् ।
ओदनन्तु कृतं विद्यात् न तस्य करणं पुनः । ९२
सीमन्तं दर्भपिञ्जूल्यास्तिस्रस्ताभिस्त्रिरुन्नयेत् ।
त्रिभिः श्वेतैश्च शललैः प्रोक्तो वीरतरः शरः । ९३
दिशाश्च विदिशाश्चैव यत्र नोक्ता विचारणा ।
"सर्वतः" तत्र शब्दोऽयं विधियोगे निपात्यते । ९४
विहितप्रतिषिद्धाश्च प्रणीतां नोपकल्पयेत् ।
वैरूपाक्षं अपेम्यक्षं प्रपद्यञ्चैव यज्ञवित् । ९५

परिधीꣳस्तु न कुर्वीत गृह्याकर्मसु याज्ञिकः ।
उदकाञ्जलयस्तिस्रस्ते वै परिधयः स्मृताः । ९६
सर्वेषा मेव होमानाꣳ समिदादौ विधीयते ।
कर्म्मान्ते चैव मेव स्यात् स्वाहां तत् न कारयेत् ।९७
इध्म मष्टादश दारु प्रवदन्ति विचक्षणाः ।
दर्शे च पौर्णमासे च क्रियास्वन्यासु विꣳशति । ९८
प्रादेशमात्रं कुर्वीत मेक्षणꣳ समिधस्तथा ।
इध्मः समानवृक्षाणां द्विप्रादेशप्रमाणतः । ९९
प्रागग्राः समिधो देयास्ताश्च काम्ये ष्वपाटिताः ।
शान्त्यर्थेषु सशुक्ला ऽऽर्द्रा विपरीता जिघांसति । १००
इध्मः सन्नहनादानं चरुश्रपण मेव च ।
तूष्णी मेतानि कुर्वीत समस्तश्चेध्म माददेद् । १०१
आचार्य्यानुमतं वाक्य मेकीयं गृह्यते क्वचित् ।
शेषाण्येकीयवाक्यानि आचार्य्यो न प्रशंसति । १०२
द्रव्याणा मुपक्लृप्तानाꣳ होमीयानां यथाविधि ।
प्रसिञ्चेन्मेक्षणं कुर्य्यादद्भिरभ्युक्षण मेव च । १०३
पवित्र मन्तरे कृत्वा स्थाल्या माज्यꣳ समावपेत् ।
एतत् सम्पूयनं नाम पश्चादुत्पवनं स्मृतम् । १०४
अग्निना चैव मन्त्रेण पवित्रेण च चक्षुषा ।
चतुर्भिरेव यत् पूतं तदाज्य मितरद्हृतम् । १०५

घृतं वा यदि वा तैलं पयो वा दधि यावकम्।
आज्यस्थाने नियुक्तानामाज्यशब्दो विधीयते। १०६
आज्यानाᳵ सर्पिरादीनाᳵ संस्कारे विधिचोदिते।
अनधिश्रयणं दध्नः शेषाणाᳵ श्रयणं स्मृतम्। १०७
यथा सीमन्तिका नारी पूर्वगर्भेण संस्कृता।
एवमाज्यस्य संस्कारः संस्कारे विधिनोदिते। १०८
आज्यस्य हविषां चैव आज्ये पूर्वक्रियाविधिः।
तस्य सम्प्लवनं पूर्वं चरोः पर्य्युक्षणं परम्। १०९
पाणिना मेक्षणेनाथ स्रुवेणैव तु यज्ञवित्।
हूयते चानुपस्तीर्य्य उपघातः स उच्यते। ११०
यदुपघातं जुहुयाच्चरावाज्यᳵ समावपेत्।
मेक्षणेन तु होतव्यं नाज्यभागौ न स्विष्टकृत्। १११
हुत्वाज्यं परिशेषेण यद् द्रव्य मुपकल्पितम्।
स्रुवेणैव तु तत् स्पृष्टं सम्पातं चैव तं विदुः। ११२
स्थालीपाकाव्रतान्यत्तु यत्र संज्ञा निपात्यते।
तत्राज्यभागौ हुत्वैव स्रुच मास्तीर्य्यावद्यति। ११३।

इति गोभिलाचार्यपुत्रप्रणीते गृह्यासङ्ग्रहे
प्रथमः प्रपाठकः समाप्तः ॥

---

॥ अथ द्वितीयप्रपाठकः ॥



स्मृतेभ्यो न प्रचिन्वीयात् यातयामं स्मृतं स्मृतम् ।
स्मृतशेषात्ततो गृह्य यज्ञवास्तुक्रिया तथा । १
यज्ञवास्तुक्रियां कृत्वा विधिदृष्टेन कर्म्मणा ।
आज्यधारामविच्छिन्नां जुहुयात् सार्वकामिकीं । २
सायंप्रातर्वैश्वदेवे पितृयज्ञे तथैव च ।
कम्बूके गोमये नित्यं व्रतानां समिधासु च । ३
चैत्ये यूपे व्रीहियवे भूमावप्सु च याज्ञिकैः ।
व्याहृतीर्न प्रयोक्तव्या यज्ञवास्तुक्रिया तथा । ४
चरवे यो विधिः प्रोक्तः स यज्ञ इति निश्चयः ।
बलिं तेभ्यो न कुर्वीतापसिद्धार्थबलीन् हरेत् । ५
यत्र मन्त्रा न विद्यन्ते व्याहृतीस्तत्र योजयेत् ।
मन्त्राणामेव चादेशे मन्त्रात् कर्म समाचरेत् । ६
भूराद्या व्याहृतयो वेदेभ्यो निःसृताः पुरा ।
महत्त्वं व्याहृतित्वञ्च प्राप्ताः स्वेनैव कर्मणा । ७
ॐकारजननात्तासां महत्वं परिभाष्यते ।
व्याहृत्या व्याहृतित्वञ्च तेन चैविद्यतां ययुः । ८
ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।

कण्ठं भित्त्वा विनिर्यातौ तेनैतौ मङ्गलावुभौ । ९
अथैताः स्वयाहृतगोग्यवोयस्यः पराः स्मृताः ।
ऐरावतः प्रतिच्छेत् वेदान्तेष्वाश्रिताश्च याः । १०
मध्ये स्थण्डिल मन्ते च वारिणा परिसंवृतम् ।
अविदासिनए कृदं विद्यात्तादृशं कर्मणा विदुः । ११
यत श्रया च वित्तश्च सत्यं धर्मः शमो दमः ।
अभरूपः स विज्ञेयः स्वाश्रमे यो व्यवस्थितः । १२
लौकिके लोकसामान्ये क्रव्यादाग्नौ वृथा हुतम् ।
याज्ञिकं पुण्य मायुष्यं कर्मणा नोपपद्यते । १३
वैदिके लौकिके वाऽपि यञ्जुहोति प्रयत्नतः ।
दैदिके ब्रह्मलोकः स्यात् लौकिके पापनाशनम् । १४
स्ववर्णाभिरनिन्द्याभिरद्भिरक्षतमिश्रितैः ।
स्नानं चतुर्भिः कलशैः स्त्रीभिः स्त्रीं यत्र प्लावनम् ।१५
गौड़ी पैष्टी च माध्वी च विज्ञेयास्त्रिविधाः सुरा ।
पाणिकर्मणि गौड़ी स्यात्तत्या माध्व्यधमा सुरा । १६
नग्निकान्तु वदेत् कन्यां यावन्नर्त्तुमती भवेत् ।
ऋतुमती त्वनग्निका तां प्रयच्छेत्त्वनग्निकाम् । १७
अप्राप्ता रजसो गौरी प्राप्ते रजसि रोहिणी ।
अव्यञ्जिता भवेत् कन्या कुचहीना तु नग्निका ।१८
व्यञ्जनैस्तु समुत्पन्नैः सोमो भुञ्जीत कन्यकाम् ।

पयोधरैस्तु गन्धर्व्वा रजसाग्निः प्रकीर्त्तितः । १९
तस्माद्व्यञ्जनोपेता मरजा मपयोधराम्।
अभुक्ताञ्चैव सोमाद्यैः कन्यकान्न प्रशस्यते । २०
वेदिपिण्डात् क्रियावती सीतायाः फलते कृषिः ।
अक्षोभ्या च ह्रदे ज्ञेया गोष्ठे भवति गोमती । २१
चतुष्पथे प्रकीर्णा स्यात् द्यूतस्थाने कलिप्रिया ।
श्मशाने म्रियते भर्त्ता वन्ध्या भवति चोषरे । २२
नवमे सर्व एवैते कन्यायाः परिगृह्यन्ते ।
पाणिग्रहणमन्त्रास्तु नियतं दारलक्षणम् । २३
विवाहे यो विधिः प्रोक्तो मन्त्रा दाम्पत्यवाचकाः ।
वरस्तु तान् जपेत् सर्वान् ऋत्विग्राजन्यवैश्ययोः ।२४
महानदीषु या आपः कौप्यान्याश्च ह्रदेषु च ।
गन्धवर्णरसैर्युक्ता ध्रुवास्ता इति निश्चयः । २५
गन्धमाल्यैरलङ्कृत्य सकुम्भो वाग्यतः शुचिः ।
धारयेत् त्रिषु वर्णेषु प्रावृतांसो द्विजोत्तमः । २६
यदा निष्क्रामयेत्कन्यां वरः पाणिं जिघृक्षयन् ।
अग्निप्रदक्षिणं कृत्वा कटस्तीर्णं पदं व्रजेत् । २७
पदा प्रपद्य पन्थानं पतियानं सञ्जपेद्वधूः ।
वरो वाऽत्र जपेन्मन्त्र माकटान्तादिति स्थितिः । २८
लाजामाज्यं स्रुवं कुम्भं प्राजनाश्मान मेव च ।

प्रदक्षिणानि कुर्वीत दम्पती तु विला ग्रही । २९
प्राजापाह मुद्ग्राहं ब्रह्माण मृत्विजं तथा ।
एतानि वाह्यतः कृत्वा शेषाणान्तु प्रदक्षिणम् । ३०
दक्षिणां दिश मास्थाय यमो मृतुश्च तिष्ठतः ।
तयोस्तु रक्षणार्थाय तस्माद् ब्रह्मा वहिर्भवेत । ३१
सोमः प्रकृतिरेखा हि लाजानाश्रित्य तिष्ठति ।
विरुद्ध माज्यं सोमेन नाभिघारण मर्हति । ३२
शमीपलाशमिश्राणां लाजाना मभिघारणम् ।
पूर्वाणां घृतमिश्राणा माचार्यैः कल्पितं यथा । ३३
तथा लाजाञ्जलिर्बध्वा हूयतेऽञ्जलिपर्वभिः ।
एवं लाजहविःशेषं होतव्यं शूर्पजिह्वया । ३४
अवसिक्तान्तु विधिना पाणिग्राहन्तु प्राजनी ।
रक्षार्थ मनुगच्छेत समाहं चाह मेव वा । ३५
ब्राह्मस्यार्षस्य दैवस्य प्राजापत्यस्य याज्ञिकैः ।
पूर्वं होमविधिः प्रोक्तः पश्चात् परिणयः स्मृतः । ३६
गान्धर्वासुरपैशाचा विवाहा राक्षसाश्च ये ।
तेषां परिणयः पूर्वं पश्चाद्धोमो विधीयते । ३७
उद्वर्त्तनं नखच्छेदो रोमच्छेदन मेव च ।
स्रंसनं मेखलायाश्च स्नासनानि विदुर्बुधाः । ३८
चूडाकर्मणि सीमन्ते यश्च पाकः सदा गृहे ।

विवाहे चैव लाजानां नोक्तो निर्वपणो विधिः ।३९
दक्षिणाकपर्दा वासिष्ठा आत्रेयास्त्रिकपर्दिनः ।
आङ्गिरसः पञ्चचूडा मुण्डा भृगवः शिखिनोऽन्ये । ४०
सर्वयज्ञेषु विप्राणा मग्निः पूर्वं प्रवर्त्तते ।
तस्मात् सुरोत्तमा ह्यापोऽग्निरेवाभिषिचयेत् । ४१
ब्रह्मचारी व्रतादेशे व्रतनाम प्रवाचयेत् ।
चरिष्ये यावदन्ताय सावित्रे चान्तकीर्त्तनम् । ४२
समा मासा महोरात्रास्तुल्या ब्राह्मणचोदिताः ।
सावित्र मृष्टभिर्वर्षैः कार्य्यं मासैर्दिनैश्च वा । ४३
सावित्रं यावदन्ताय धार्य्यं सर्वाश्रमस्थितैः ।
चूडाकरणधर्मेण गोदाने चास्य वापनम् । ४४
विप्राणा मग्निराचार्य्य इन्द्रस्त्राता व्रते व्रते ।
तस्मात् सर्वव्रतान्तेषु चरुरैन्द्रो विधीयते । ४५
अजिनं सर्वदैवत्य मैन्द्रो दण्ड इति स्मृतः ।
सावित्रीं मेखला माहुस्तस्मात् सर्व्वाणि धारयेत् ।४६
मेखला मजिनं दण्ड मुपवीतं कमण्डलुम् ।
अप्सु प्राश्य विनष्टानि गृहीतान्यानि मन्त्रतः । ४७
यज्ञोपवीतं कुर्वीत सूत्रेण नवतान्तवम् ।
देवतास्तत्र वक्ष्यामि आनुपूर्वेण याः स्मृताः । ४८
ॐकारः प्रथमस्तन्तुर्द्वितीयस्त्वाग्निदैवतः ।

तृतीयो नागदैवत्यश्चतुर्थः सोमदैवतः । ४९
पञ्चमः पितृदैवत्यः षष्ठश्चैव प्रजापतिः ।
सप्तमो वासुदैवत्योऽष्टमो यमदैवतः । ५०
नवमः सर्वदैवत्य इत्येते नव तन्तवः ।
द्विगुणं त्रिगुणं वापि एकग्रन्थिकृतं विदुः । ५१
केनोत्पादितं सूत्रम् केन वा त्रिगुणीकृतम् ।
केन वास्य कृतो ग्रन्थिः केन मन्त्रेण मन्त्रितम् । ५२
ब्रह्मणोत्पादितं सूत्रं विष्णुना त्रिगुणीकृतम् ।
रुद्रेण तु कृतो ग्रन्थिः सावित्र्या चाभिमन्त्रितम् । ५३
स्तनादूर्ध्वमधो नाभेर्न कर्त्तव्यं कथञ्चन ।
स्तनादूर्ध्वं श्रियं हन्ति नाभ्यधस्तात्तपःक्षयः । ५४
गोभिर्वालपवित्रेण धार्य्यमाणेन नित्यशः ।
न स्पृशन्तीह पापानि श्रियं गात्रेषु तिष्ठति । ५५
गोभिर्वालपवित्रेण यस्तु सन्ध्यामुपासते ।
गोधर्मेष्वेव वर्त्तन्ते न स पापेन लिप्यते । ५६
गोभिर्वालपवित्रेण यस्त्वग्निमुपासते ।
पञ्चाग्नयो हुतास्तेन यावज्जीवं न संशयः । ५७
आचार्य्येणाभ्यनुज्ञात आचार्य्याग्नौ विधिर्यथा ।
प्रणीतेऽग्नौ समिद्धत्याहन्यहन्यगा सा ब्रह्मचारिणाम् । ५८
दधि सर्पिश्च संयुक्तः प्रोक्तो होम पृषातकः ।

ोमकाले तु तस्याग्नेः स्थान मुत्तरपूर्वतः । ५९
ध्. मग्रा प्रिया च हव्या च इड़ा रन्ता सरस्वती ।
मही विश्रुता चाघ्न्या च गोनामानि विदुर्बुधाः । ६०
मधुपर्कं पिबेन्मन्त्र मन्त्रतो हृदयं स्पृशेत् ।
अपूपानां चरोश्चापि सर्वस्थानां न्यनक्ति च । ६१
दध्यक्षतसुमनस आपश्चेति चतुष्टयम् ।
अर्घ्य एष प्रदातव्यो गृह्ये ये अर्घ्यार्हाः स्मृताः । ६२
दध्यक्षतसुमनसो घृतं सिद्धार्थका यवाः ।
पानीयश्चैव दर्भाश्च अष्टाङ्गो ह्यर्घ्य उच्यते । ६३
सर्पिषा मधुना दध्ना अर्च्चयेदर्हयन् सदा ।
ऋत्वि...क्तेन विधिना मधुपर्केण याज्ञिकः । ६४
कंसे नितय मासिच्य कंसेन परिसंवृतम् ।
परिश्रितेषु देयः स्यान्मधुपर्क इति ध्रुवम् । ६५
मधुपर्के तथा सोमे अप्सु प्राणाहुतीषु च ।
अनुच्छिष्टो भवेद्विप्रो यथा वेदविदो विदुः । ६६
प्राणाहुतिषु सोमेषु मधुपर्के तथैव च ।
आस्यहोमेषु सर्वेषु नोच्छिष्टो भवति द्विजः । ६७

दधनि पयसि वा कृतान्न
मधु दद्यान्मधुपर्क मेव माहुः ।
दधिमधूदके वापि सक्ता-
वितीरते विहितास्त्रयस्तु मन्याः । ६८

पवित्रान्तर्हितं कृत्वा चरुं प्राज्ञोभिघारयेत् ।
उद्वास्य चैवं विधिना एवं तन्त्रं न लुप्यते । ६९
चतुर्मुष्टिश्चरुः कार्य्यश्चतुर्णा मुत्तरोऽपि वा ।
कपालस्य प्रमाणेन अपूपानष्टकाविधौ । ७०
चतुर्भागं पाणितलात् कपालं याज्ञिका विदुः ।
पृथक्कपालान् कुर्वीत अपूपानष्टकाविधौ । ७१
वपाहोमे मुखे चैव होमे स्विष्टकृते तथा ।
व्याहृतीर्न प्रयोक्तव्या मुखे नाप्सु च लक्षणम् । ७२
सन्ततः प्रणवः कार्य्यः पितृयज्ञेषु ब्राह्मणैः ।
उपांशुकरणञ्चापि सह कर्त्रा समस्वरैः । ७३
कालातीतेषु होमेषु उत्तरेष्वागतेषु च ।
कालातीतानि हुत्वैव उत्तराणि समारभेत् । ७४
यान्यतीतान्यतिक्रम्य उत्तराणि समारभेत् ।
न देवाः पितरस्तस्य प्रतिगृह्णन्ति तद्धविः । ७५
प्रक्रमणे तथोद्वाहे होमे स्विष्टकृते तथा ।
यस्यां दिशि विधिं प्राहुस्तां माहुरपराजिताम् । ७६
अयुक्तं मस्तुलवणैरपर्य्युषित मेव च ।
हविष्य मेतदन्नाद्य मसुरैश्चाप्यसंयुतम् । ७७
कृषवः सर्वखल्वास्य कोद्रवा वरटैः सह ।
अकृताग्रयणे भक्ष्या येषां नोक्ता हविर्गुणाः । ७८

नवयज्ञेऽधिकारस्थाः श्यामाका व्रीहयो यवाः ।
नाश्नीयान्न च हुत्वैव मन्येष्वनियमः स्मृतः । ७९
श्राद्धे ब्राह्मण एकश्चेत् स्वल्पञ्च प्रकृतं यदि ।
वैश्वदेवं कथं तत्र इति मे संशयो महान् । ८०
प्रणीतान्नाद्य मुद्धृत्य सर्वस्य प्रकृतस्य तु ।
ब्राह्मणाय प्रदातव्य मेवं भवति सम्पदे । ८१
यद्येकं भोजयेच्छ्राद्धे छन्दोगं तत्र भोजयेत् ।
ऋचो यजूंषि सामानि त्रैविद्यं तत्र तिष्ठति । ८२
ऋग्भिस्तु पितरः प्रीता यजुर्भिस्तु पितामहाः ।
सामभिः प्रपितामहास्तस्मात्तं तत्र भोजयेत् । ८३
अटेत पृथिवीं कृत्स्नां सशैलवनकाननाम् ।
लभेत यदि पित्रर्थे साम्ना मन्त्ररचिन्तकम् । ८४
दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणाश्च विशेषतः ।
नैते निर्माल्यतां यान्ति नियोज्यास्तु पुनः पुनः । ८५
दर्भाः पिण्डेषु निर्माल्या विप्राः प्रेतान्नभोजने ।
मन्त्राः शूद्रेषु निर्माल्यानिर्माल्याश्चितिपावकाः । ८६
पिण्डार्थं ये स्तृता दर्भास्तर्पणन्तु कृतन्तु यैः ।
धृतैः कृते च विण्मूत्रे त्यागस्तेषां विधीयते । ८७
उरसि पितरो भुङ्क्ते वामपार्श्वे पितामहाः ।
प्रपितामहा दक्षिणतः पृष्ठतः पिण्डतर्षुकाः । ८८

क्षुते निष्ठीवने चैव दन्तोच्छिष्टे तथानृते ।
पतितानाञ्च सम्भाषे दक्षिणं श्रवणं स्पृशेत् । ८९

अग्निरापश्च वेदाश्च सोम सूर्य्योऽनिलस्तथा ।
एते सर्व्वे च विप्रस्य श्रोत्रे तिष्ठन्ति दक्षिणे । ९०

आत्मतन्त्रेषु यन्नोक्तं तत् कुर्य्यात् पारतन्त्रिकम् ।
विप्रा: खलु सामान्या ये चोक्ता वेदवादिभिः । ९१

अग्निना वाप्यतिरिक्तो वा यः स्वशाखोक्त माचरेत् ।
तेन सन्तनुयाद् यज्ञं न कुर्य्यात् पारतन्त्रिकम् । ९२

यः स्वशाखोक्त मुत्सृज्य परशाखोक्त माचरेत् ।
अप्रमाण मृषिं कृत्वा सोऽन्धे तमसि मज्जति । ९३

पुनरुक्त मतिक्रान्तं यच्च सिंहावलोकितम् ।
गोभिले ये न पश्यन्ति न ते ज्ञास्यन्ति गोभिलम् । ९४

गोभिलाचार्य्यपुत्रस्य योऽधीते संग्रहं पुमान् ।
सर्व्वकर्म्मस्वसंमूढ़ः परां सिद्धि मवाप्नुयात् । ९५ ।

इति श्रीगोभिलाचार्य्यपुत्रप्रणीते कर्म्मप्रदीपे
द्वितीयः प्रपाठकः समाप्तः ॥

॥ समाप्तश्चायं कर्म्मप्रदीपः ॥

